॥ श्रीरस्तु ॥

# ॥ भगवदनुधावननामा चम्पूप्रबन्धः ॥

## तत्प्रणीतं श्रीवेङ्कटेशशतकं च



उ. कृष्णशास्त्री ग्रन्थकर्ता

मूल्यं हरिभक्तिः ॥

॥ श्रीरस्तु ॥

हरिभक्तवरचरणनलिनरेणु - श्रीकृष्णशास्त्रि-

प्रणीतः

# भगवदनुधावननामा

## चम्पूप्रबन्धः श्रीवेङ्कटेशशतकं च

श्री - काञ्ची - कामकोटिपीठाधीश -

जगद्गुरु - श्री - श्री - श्रीचन्द्रशेखरेन्द्रसरस्वतीप्रदत्ताभिनन्दनपत्रिकया

वराहपुराभिजन (वरहूर्) - श्रीकल्याणसुन्दरशास्त्रि -

इञ्जिकोल्लैवास्तव्य - श्रीजगदीश्वरशास्त्रि -

श्रीविद्यादेशिकचिदानन्दनाथदीक्षाभिधान - श्रीसुब्रह्मण्यार्य -

श्रीकृष्णभक्ताग्रेसर - श्रीनटेशप्रभुप्रमुखवितीर्ण-

प्रास्ताविकादिभिश्च समलङ्कृतः ॥

साहित्यविशारद - साहित्यशिरोमणि - वेदान्तशिरोमण्यादिबिरुदाङ्कित -

वराहपुराभिजन (वरहूर्) -

**श्रीकल्याणसुन्दरशास्त्रिभिः**

व्याकरणविद्याप्रवीण - काकवाकाग्रहाराभिजन -

**श्रीमहादेवशास्त्रिभिश्च**

यथामति संशोध्य प्रकाशितः ।

हरिभक्ताग्रेसराणां विनैव मूल्यं विनियोज्यश्च

कलिवत्सर - मन्मथ ५०५७.  क्रैस्तवाब्द - 1955.



[मूल्यं - श्रीहरिभक्तिः

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य श्रीमच्छङ्करभगवत्पाद-
प्रतिष्ठित श्रीकाञ्चीकामकोटिपीठाधिप जगद्गुरु-
श्रीमच्चन्द्रशेखरेन्द्रसरस्वती श्रीपादैः

काकवाकाग्रहारनिकटस्थ शूलमेन्यग्रहारनिवासि श्री कृष्णशास्त्रि-
विषये क्रियते नारायणस्मृतिः ।

भवता भक्त्या समर्पितं भगवदनुधावनाख्यं काव्यं श्रुत्वा नितान्तसन्तुष्टान्तरङ्गा वयम् । "काव्यं यशसे अर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये" इतिश्रीमम्मटभट्टोक्तरीत्या सत्काव्यं यश आदिभिस्सह परमानन्दात्मकं रसशब्दोदितं ब्रह्म साक्षात्कारयति । तत्रैव च परां निर्वृतिमादधाति । विशेषतो यत् श्रीकृष्णाख्यपरब्रह्मानुधावनैकप्रयोजनं निबद्धम् । एतादृशस्य भगवन्महिमावेदकस्य वेदान्तरहस्यार्थभावनापरिपाकमधुरस्य श्रीकृष्णलीलाविनोदविजृम्भितस्य भक्तिवैराग्यपारम्यतत्परस्य काव्यस्यास्य निषेवणेन आस्तिकाः श्रीकृष्णेऽनवच्छिन्नां भक्तिधारां प्राप्य प्रमोदन्तां । भवतो भक्त्या परितुष्टः स एव भगवान् भवते आयुरारोग्यैश्वर्यादिकं स्वस्मिन् चेतस्स्थैर्यञ्च वितरतादित्याशास्महे ॥

विजयस्थानम् विष्णुकाञ्ची
मन्मथाधिक भाद्रपदबहुळ दशमी

नारायणस्मृतिः.

श्रीकुम्भकोणं अद्वैतसभा प्रधानपण्डित श्रीप्रान्तियंगरै श्रीसुब्रह्मण्यशास्त्रिणा प्रदत्ता—

काकवाकं उ. कृष्णशास्त्रिकृत भगवदनुधावननामक चम्पूग्रन्थ-प्रशंसापत्रिका—

श्लो ॥ भगवदनुधावनाभिधकृतिरेषा(शान्त)ज्ञानभक्तिरसभरिता ।
विदुषामपि परितोषणकरणायालम्भविष्णुरिति मन्ये ॥

**काञ्चीकामकोटिस्वामिनां मठम्,**
मद्रास् मुत्तियालपेट्टै तम्बुशेट्टिवीथी, नं. 119.
ता. 2—9—55.

मद्रास् नुङ्गंबाकं श्रीमदुपनिषदाश्रमस्थापक

## श्रीश्रीश्री विवेकानन्दस्वामिना क्रियते नारायणस्मृतिः ।

अस्मदत्यन्तप्रियान्तेवासि ब्रह्मश्री काकवाकं उ. कृष्णशास्त्रिकविना विरचित भगवदनुधावन काव्यमामूलाग्रं श्रुत्वा प्रहृष्टोस्मि। ज्ञानभक्तिबोधकोयं ग्रन्थः मुमुक्षूणामत्यन्तोपकारक इति घण्टाघोषं वदामः ॥

यथा—

कृतिरियमभिनवशैलीमहिताद्वैतादिशास्त्रविषययुता ।
भक्तिरसावेशकरी श्रोतॄणां ज्ञानदायिनी जयतात् ॥

इति नारायणस्मृतिः
विवेकानन्दस्वामी उपनिषदाश्रमम्,
नुङ्गंबाकम्—10-9-55

## ॥ श्रीरस्तु ॥

महदिदं मे प्रमोदस्थानं यन्नानाजन्मसञ्चितकर्मपुञ्जफलायमान-संसृतिमहार्णवान्तर्निमग्नानां तत एव च नातिचिरमुत्तितीर्षूणां झटित्येव तत्तीरप्रापणचतुरीणाया भक्तितरेः सुसम्पादकं सुललितमधुरवचोगुम्फितं भगवदनुधावनाभिधानमिदं काव्यमामूलाग्रमवलोकयितुं सन्दर्भं कञ्चनाहमुपलेभ इति ।

इदं हि काव्यं भगवद्भक्तिपरीवाहात्मना प्रवृत्तं अत एव पठनमात्रेणैव ग्रन्थकर्तृणां विद्यमानं हार्दभगवत्प्रेमातिशयं अकृत्रिमकविताचातुर्यं च व्यञ्जयत्, उत्पादयच्च पठितृणामपि सद्यो भक्त्यतिशयं, आकलयच्च पठनकाले वयमेव भगवन्तमनु धावाम इतीव कञ्चनोल्लासं, प्रकाशयच्च ग्रन्थकर्तृणां नानादेशवृत्तान्तपरिज्ञानं बहुश्रुततां अनेकविद्वज्जनसमागमं गुरुभक्तिं विद्वज्जनपक्षपातितां च, आसादयच्च काव्यत्वेन सह चरित्रग्रन्थतामपि, अनन्वयदूरान्वयक्लिष्टसमस्तपदसन्निवेशादिविधुरं ओजःप्रसादादिगुणोज्ज्वलं सकलजनश्लाघनीयं विराजत इति नेदमाभिमानिकं वचनमपि तु करतलामलककल्पमेवैतदेतद्वाचकानाम् ।

यस्य हि भगवति परा प्रीतिरस्ति तस्मिन्नेव भगवतोऽतिप्रीतिर्भवति । 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतेः । आह च भगवान् 'भक्त्या लभ्यस्त्वनन्यया' इति । तत् ये भगवद्भक्तिं कामयन्ते तेषां 'भक्तिविवृद्धिर्भागवतेन' इत्युक्तभागवतवत् अवश्योपादेयः संक्षिप्तत्वेन चानुदिनमनुसन्धानसुलभः हृदयकालुष्यापनोदनेन भक्त्यभिवर्धनक्षमश्चायं चम्पूप्रबन्धः ।

वक्तव्यशेषश्चास्य काव्यस्य महिमा एतदवलोकनसन्दर्भप्रदातृभिः श्रीयुतैः कठिनमपि शास्त्रार्थं ललितया शैल्या बोधनेन वशीकृतसकल-

रसिकजनान्तरङ्गैः नानातन्त्रपरामर्शलब्धविश्वतःप्रसृत्वरशेमुषीकैः शास्त्रैकधनैः स्मितपूर्वाभिभाषिभिः ब्रह्मश्री कल्याणसुन्दरशास्त्रिवर्यैः लिखितेऽतिविस्तृते प्रास्ताविके विस्तरेण ज्ञातुं शक्य इत्यलं कृतकरणेनेति शम् ।

इति विद्वज्जनानुचरः,
**रामानुजः.**
मद्रपुरगवर्मेण्टु कोशागारविद्वान्,
(व्याकरण-न्याय-वेदान्तशिरोमणिः)

चेन्नपुरी,
8-8-1955.

---

॥ श्रीः ॥

## ॥ श्रीगुहमयम् ॥

श्रीकृष्णरूपाश्रित भक्तदुःखमोहापहारिण्यमरेन्द्रपूज्या ।
या सच्चिदानन्दसुलक्षणा श्रीमाता तया कृष्णकविः सुदृष्टः ॥ १

गोपीलोचनवारिजांबरमणिः गोसङ्घरक्षामणिः
गोपालान्वयवार्धिमौक्तिकमणिः गोपालचूडामणिः ।
गोलोकस्थितराधिकाधृतमणिः मच्चित्तचिन्तामणिः
गोपालाख्यवरेन्द्रनीलसुमणिः पायात्सदा सन्मणिः ॥ २

न चेत् कृपा मदम्बाया वक्त्रात् वाङ् निः सरेत् कथम् ।
द्राक्षातिशायिमाधुर्या चाम्लीकृतसुधारसा ॥ ३

वृष्णिवंश समुद्भूतं कृष्णादुःखनिवारकम् ।
तृष्णाहरं गृहीतुं श्रीकृष्णं कृष्णोऽनुधावति ॥ ४

पीताम्बरसमावाप्तिराश्वासे प्रथमे हरेः ।
पीताम्बरस्य महिमा द्वितीये वर्णितो मुदा ॥ ५

पीताम्बरार्पणात् हृष्टकृष्णलाभः तृतीयके ।
पीताम्बरकृपावाप्तिः आश्वासे वर्णितोऽन्तिमे ॥ ६

सद्भक्तिप्रवणातिशुद्धमनसा कृष्णेन काव्यं त्विदं
सद्भक्तान्तरतुष्टये विरचितं सद्गद्यपद्यात्मकम् ।
सद्भक्तालिहृदम्बरे चितिवपुः खेलन् स पीताम्बरः
सद्भक्तोत्तमकृष्णनामसुकवेः काव्येन सन्तुष्यतु ॥ ७

श्रीगुहानन्दमण्डली स्थापक तदध्यक्ष-
श्रीचिदानन्दनाथ पादकमलरेणुः
**अनन्तानन्दः (स्वामिशास्त्री.)**
टङ्कसालवीथी, मद्रास्.
शिवम्—21-8-55.

---

## ॥ श्रीराधामाधवश्शरणम् ॥

श्रीभगवदनुधावनाख्यमदीयकृतिमुद्दिश्य मया कृतं स्वाशयाविष्करणं यथा श्रुणुत भोश्श्रद्धाळवस्साधवः। नहि कर्तुराशयाविष्करणमन्तरा ग्रन्थस्य पूर्णभावग्रहणे साधनान्तरमस्ति । परिमितप्रज्ञोऽप्यहमीदृशमहाग्रन्थनिर्माणसाहसं कुर्वन्न जिह्रेमि । अहमपि कविर्भवामीति चापलमेवात्र कारणं नतु सकलशास्त्रतलस्पर्शिशेमुषीविभवः । किन्तु । आस्थास्वास्थ्यबलात् आशैशवमद्यावधि सोत्साहमनेकविधसद्ग्रन्थपठनश्रवणप्रवचनालोचनाविवेचनाभ्यासवशात् विभिन्नप्रस्थानदेशभाषामय वैदिकलौकिकविषयकवार्तापत्रिकासंवत्सरादिसम्पुटीपठनपर्यालोचनासंस्कार - कारणात् । तीर्थाटननिमित्तलब्धदेशाटनसमयप्राप्तबहुमतविषयबोधकोपन्यासकैर्मिथस्सल्लापलाभात् । तत्तद्देशनिवासिद्वैताद्वैतविशिष्टाद्वैतवल्लभ-

चैतन्यनिम्बार्कमतानुयायि तर्कव्याकरणशास्त्रनिपुणपण्डितप्रकाण्डवादोपवादस्वारस्यग्रहणनैपुणीवशात् । भक्तिज्ञानवैराग्यमहितसाधुपुङ्गवसहवाससल्लापावलम्बात् । श्रद्धाभक्तिविनयविश्वासपूर्वकामायिकानुवर्तनात्मकशुश्रूषापरिसेवित स्वगुरुलब्धपरमार्थ ज्ञानसंसिद्धिबलात् । वासिष्ठभागवतग्रन्थबहुवारपठनश्रवणविशेषपरिश्रमलब्धबहुश्रुततावशाच्च सञ्जातास्संवेदनाविशेषाएव प्रकृतकृतिरूपेण मूर्तीभूता इत्यतिरोहितम् । नाहं सर्वज्ञः किन्तु सर्वज्ञकिङ्करभूतइति सविनयमावेदयामि ॥

कति कृतयः कति कवयः कति नष्टाः कति चरन्ति कति शिथिलाः इति वाक्यरीत्या कविरिति वक्तुं मम व्रीडा सञ्जायते। अथापि ग्रन्थेऽस्मिन् कान्तासम्मिततया बहवः परमार्थोपदेशास्सुकुमारमार्गेण सूचिताः । परिहाससहिताःपरमार्थाःक्वचन क्वचन परमार्थसहिताःपरिहासाश्च सूचितास्सन्दर्भानुसारेण । भक्तिरसप्रधानेऽप्यस्मिन्काव्ये हास्याद्भुतभयानकरसास्तदङ्गतया प्रदर्शितास्तत्र तत्र सुधीभिर्विभावनीयाः। स्वीयस्वाप्नानुभूतिकंचुकितेऽस्मिन्ग्रन्थे 'स्वप्ने दिव्यज्योतिस्सन्दर्शनं-भक्तेन साकं शिवकेशवयोस्सल्लापः - तदनुधावनोक्तिप्रत्युक्तयः - तद्दिव्यमङ्गळविग्रहपारिरम्भणं-मायाजयरूपपीताम्बरलाभः' । इत्यादयस्सर्वजनसाधारणविषयाः कतिचन ग्रन्थगोचरा बहुजनानुभवगोचरार्हा इति साहसेन वर्णिता इति मां क्षन्तुमर्हन्तु सन्तइति कृताञ्जलिर्विरमामीति शं । ग्रन्थस्यास्य श्रीमुखप्रदान पीठिकालेखनप्रशंसापत्रिकाप्रदातॄणां कृतज्ञतासूचनार्थं क्रियते प्रणामाञ्जलिपूर्वकमुपचारोक्तिः । तत्रादौ एतादृशो मत्कृतः कश्चन ग्रन्थोस्तीति सकृत् मत्कृतविज्ञप्तिश्रवणमात्रादेव मामनुगृह्य स्वामोदं प्रदर्श्य तथैव कुर्विति गुर्वीमनुकम्पां मयि निधाय ग्रन्थप्रकटनानुमतिं च श्रीमुख-

प्रदानेन महान्तमनुग्रहं च कृतवतां श्री श्री श्री काञ्चीकामकोटिपीठपतीनां श्रीचन्द्रशेखरेन्द्रसरस्वतीस्वामिनां निरवग्रहमनुग्रहं मामतिवेलमानन्दयतीति महत्यहो मे भाग्यरेखा ॥

धीमतामग्रेसरैस्साहित्यशिरोमणि-साहित्यविशारद-वेदान्तशिरोमणिबिरुदभासुरैर्भूसुरोत्तमैः विनैवायासमपरिचितपाणिनीयकाणादतंत्रमपि मनुष्यमात्रमप्यतिगंभीरभगवत्पादभाष्याभिज्ञताविधानाभिज्ञैः । शाङ्करभाष्यग्रन्थप्रवचनैकतानैः (वरगूर्) कल्याणसुन्दरशास्त्रिभिः प्रदत्ता पीठिका काव्यकुमारिकायाः रत्नपीठिकाप्राया समजनीति नातिशयोक्तिः । तथैव ब्रह्मश्री शुक्लयजुर्वेदघनपाठिनां चतुस्तन्त्रवेत्तॄणामपि सुकवितामहितानां श्रीकाञ्चीकामकोटिपीठास्थानविदुषां आत्मविद्याभूषण - श्रीविद्यालङ्कारादिबिरुदाङ्कितानां मा(द्रककेदार) इंजिकोल्लै जगदीशशास्त्रिणामनुग्रहेण प्राप्तानि ग्रन्थपरिशोधनभाषणानि काव्यकुमारिकायारत्नालङ्कारप्रायाणि नितरां शोभामावहंतीत्यतिरोहितं । श्रीमतां मत्कृतिकन्यामातमहस्थानीयैः श्रीविद्यासम्प्रदायाभिनवभस्करायमानैः श्रीमद्गुहानन्दानुग्रहलब्ध परावरविद्याज्ञानमहितैः ब्रह्मविद्याप्रचारणार्थकगुहानन्दमण्डलीस्थापकैः श्रीचिदानन्दनाथदीक्षानामशोभितैः ब्रह्मश्री(यन्)सुब्रह्मण्यार्यवर्यैः प्रेमपूर्वप्रहितः काव्यकुमारिकाशुभसन्देशो दिशति सहृदयानाममन्दमानन्दमिति सुविशदमेव सुधियां । कृतिकन्यामातुलस्थानीयैः श्रीकृष्णचैतन्यभक्तोत्तंसैः मधुरभक्तिभावरसोद्धुरान्तरङ्गैः नटेशप्रभुभिः प्रदत्ता सूक्तिमुक्तावलिः काव्यकुमारिकागळे नितरां शोभामावहतीति महती तुष्टिहेतुरस्माकं। ग्रंथमामूलाग्रं पठित्वा दोषानविगणय्य गुणकणमपि बहुमत्वा प्रशंसापत्रिकाप्रेषणेन मय्यनुकम्पां प्रदर्श्य कृतिरेषाऽचन्द्रतारकं भूयादित्याशीःप्रदानं कृतवतां संख्यावतामियं नतिततिरावेद्यते । कृतज्ञताभारविधुरेण

कृष्णनाम्ना मया । यथा । श्रीकृष्णमाचार्यस्वामिनाम् । (नुङ्गंबाकं) पि. पि. श्रीनिवासरामानुजाचार्यस्वामिनां (वाविळ्ळप्रेस्) मलंपल्लि शरभेश्वरशर्मणां । श्रीपेरुम्बूदूरुनिवासिनां चतुस्तन्त्रनिष्णातानां आसूरिरामानुजाचार्यस्वामिनां । श्रीपेरुम्बूदूरु संस्कृतकलाशाला (प्रिन्सिपाल्) N. S. शेषाद्रिअय्यङ्गार् स्वामिनां । श्री पेरुम्बूदूरुकलाशालाध्यापकानां T. श्रीरामचन्द्रशास्त्रिवर्याणां । सकलकलावल्लभानां मद्रास् मांबलवासि श्रीकडलंगुडि नटेशशास्त्रिणां । चैतन्यसम्प्रदायरसिकानां श्रीगणेशप्रभूणां । श्रीभागवताग्रेसरशुकापरनामधेयमहितानां रामस्वामिशास्त्रिणां । श्रीगुहानन्दमण्डलीसभ्यश्रीविद्यापत्रिकानिर्वाहक विद्वान् जि. यन्. वेङ्कटनरसय्यार्याणां । श्रीगुहानन्दमण्डलीप्रधान श्रीसामिशास्त्रिणां । नुङ्गंबाकं उपनिषदाश्रमस्थापक श्री श्री श्री विवेकानन्दस्वामिनां । तत्पोषक श्री सुन्दरमय्यर् समाख्यानां कुंभकोणस्थित श्रीमदद्वैतसभाप्रधानपण्डितप्रकाण्डानां । प्रान्तियंगरै सुब्रह्मण्याख्यशास्त्रिवर्याणां । व्याकरणन्यायवेदान्तशिरोमणि श्रीरामानुजाचार्याणां (मद्रास् गवर्नमेंटु लैब्ररी) मैसूर् के. शिवरामशास्त्रिणां च कृतज्ञतासूचनाय प्रणामाञ्जलिः क्रियते । सर्वात्मनास्य ग्रन्थस्य प्रकटने महत्साह्यं कृतवतो महाशेमुषीसहितस्य मत्सहजामातुर्महादेवशास्त्रिणा महोपकारा रिशलाक्षरैस्सुवर्णाक्षरैर्विद्युत्प्रदीपाव - ळिसङ्कलितैरादर्शाक्षरैश्च प्रकाशनीयइति नात्युक्तिः । निरन्तरसत्कार्यकरणप्रवणस्य काकवाकाग्रहाराभिजनस्य नारायणाख्यस्य मम मातुलेयस्य स्वसम्बन्धिनो ग्रन्थप्रचुरसहायकर्तुस्सज्जनवरेण्यस्य भगवत्कृपासिद्धिरस्त्वित्याशीः प्रदाय विरमामीति शम् ।

मद्रास्
10—9—55.

उ. कृष्णः,
राधामाधवपादपद्मदासः.

वेदान्तव्याकरणभूषण-

वे. कृष्णमाचार्यकृताभिनन्दनपत्रिका

# भगवदनुधावनम्

V. KRISHNAMACHARYA,
*Retired Sanskrit Pandit,*
Presidency College,
MADRAS.

पण्डितप्रवरैः ब्रह्मश्री कृष्णशास्त्रिभिरुपनिबद्धो भगवदनुधावनाभिधश्चम्पूप्रबन्ध आमूलचूडं मयातिमहतोत्साहेन परिपठितः। प्रबन्धोऽयं भक्तिरसपरिवाहभूतः पठितॄणां चेतसि परब्रह्मानुभवसध्रीचीमानन्दलहरीं परिस्रावयतीत्यमायमावेद्यते भावुकपरिषदि। कविनात्र स्वमनीषिकोल्लेखपरिकल्पितो भगवद्गोपबालकानुधावनरूपो विषयः सर्ववेदान्तरहस्यसारतम इति विशदमिदं वेदान्तपरिशीलिनां महताम्। 'नसंदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्' इति स्ववचनममोघीकर्तुकामो भगवान् कवेर्दृष्टिपथात्सुदूरमपसरति। भक्ताग्रेसरस्तु कविः 'सोऽन्वेष्टव्यः। द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति तस्यैव वचनान्तरं तमनुस्मारयन् अनिर्विण्णस्तमनुधावति। अन्ततो बालगोपालो भक्तपराधीनः सन् दामग्रहणचटुलाया मातुरिव भक्तिदामावलम्बनस्य कवेर्वशमुपगतः। हृदा मनीषेति स्ववचनमनुस्मरन् प्रत्यक्षोऽभवदिति नूनमिदमौपनिषदं तत्त्वरहस्यम्। कविरयं पदे पदे प्रसङ्गात् परब्रह्मतत्त्वमप्याविर्भावयति। यथा कोशस्यास्य पञ्चाशीतितमे पृष्ठे राधादेवी भगवतोऽनन्यत्वमाविष्कुर्वन् 'अनन्या राघवेणाहं

भास्करेण प्रभा यथा ' इति सर्वजगन्मातुर्जानक्या वचनं 'न जीवेयं क्षणमपि विना तामसितेक्षणाम् ' इति निखिलचराचरलोकपितू राघवस्य च वचनमनुस्मारयन् सहृदयानानन्दयति कविः। अस्मिंश्च प्रसङ्गे 'अभेद-दृष्ट्या युवयोः पृथङ् नो राधा स्तुता कृष्ण न मेऽपराधः ' इति वदन् कविः 'स्वरूपं स्वातन्त्र्यं भगवत इदं चन्द्रवदने त्वदाश्लेषोत्कर्षाद्भवति खलु निष्कर्षसमये । त्वमासीमातनः कमितुरिदमित्थंत्वविभवस्तदन्त-र्भावात् त्वां न पृथगभिधत्ते श्रुतिरपि ॥' इति ब्रह्मपदाभिधाने भगवत्याः श्रियोऽप्यभिधानं समर्थयतोऽभियुक्ताग्रेसरस्य सूक्तिमनुसर तीत्यहो चमत्कारातिशयः। एवमादिभिर्वेदान्तरहस्यार्थोद्बोधकैः सुश्लिष्ट-पदबन्धैश्च वचनैः सहृदयानां मनसि कमपि प्रमोदातिशयमुपजनयतः प्रबन्धरत्नस्य तत्कवयितुः श्रीशास्त्रिवर्यस्य च कृते धन्यवादमावेदयितु-माशंसे ॥

NUNGAMBAKAM, MADRAS
8-8-1955

इति
वे. कृष्णमाचार्यः.

॥ श्रीशारदायै नमः ॥

के. शिवरामशास्त्री, यं. ये,

साहित्यशिरोमणिर्मीमांसाशिरोमणिश्च

श्रीभगवदनुधावनाभिधग्रन्थविलोकनहृष्टः किञ्चिद्विलिखति.

ग्रन्थमवलोक्य विस्तरशो मालिखेति मन्मित्रेण कविना नियन्त्रि-तोऽहं लघु विलिखामि । यथा । भारतीयविज्ञानसर्वस्वभूतयोर्भगव-द्गीताश्रीभागवतयोस्सारभूतोऽयं ग्रन्थ इति । तदेतद्ग्रन्थमालोकयतां

सहृदयानामतिरोहितम् । अस्य कृष्णकवेश्चिरकालसुहृदोपि मम (स्नेहः प्रवासाश्रयादितिवचनानुसारेण) सुदूरस्थितत्वादेतद्ग्रन्थरत्नस्य सुविशालपीठिकालेखनभाग्यं न मया सम्प्राप्तम् । श्रीकल्याणसुन्दरशास्त्रिणामभिनवबाणभट्टकल्पानां मन्मित्रमित्राणां भाग्यरेखामूलकं पीठिकारत्नलेखनं ममातीव तोषकारणं । श्रीशास्त्रिवर्याणां वेदान्तशास्त्रसाहित्यमत्यन्तं तोषं जनयति । समेषां ग्रन्थविषयाणामेकत्र क्रोडीकरणेन वक्तुं श्रोतुं वा बहुकालसाध्यानपि विषयानग्रं पाठकानामाञ्जस्येनावगमयदित्यहो शास्त्रिणां शेमुषीविभवः । रत्नकाञ्चनसमायोगादिव बहुशोभते पीठिकोपोद्बलितोऽयं ग्रंथराजः । कविरयं प्रत्नधर्मविषयैरन्यापदेशविधया महितैरमणीयोपदेशैः सदा सर्वानधर्मपथान्निवर्त्य वैदिकमार्गे प्रवर्तयितुं बद्धादरइति जानेऽस्य महितं स्वभावं चिरकालात् । यतोऽयं पञ्चविंशतिवर्षेभ्यः प्राक् काफीवृत्तमिति ग्रन्थं विलिख्य अंधानुगान्धप्रायाणां पाश्चात्यानुकरणाविनिहतयुक्तायुक्तविचारशून्यधिषणानां विज्ञंमन्यानां जिह्वोपस्थपरायणानां सुकुमारपद्धत्या हितबोधमकार्षीत् । तदनु शिखावृत्तमिति ग्रन्थं च व्यलिखत् । नैतदेव । धर्मशास्त्रमर्मज्ञेनानेन कविना भारतीयसाङ्घिकानर्घताख्यापको धर्मदुन्दुभिनामा (शारदाबिल् खण्डनात्मको) ग्रन्थराजोपि व्यरचि । यस्य युक्तिप्रत्युक्तिमहितस्य संवादात्मकग्रन्थस्य यं. के. आचार्य, (असंब्लीमेंबर्) यु. पि. कृष्णमाचार्य (मद्रास्)। श्रीश्यामसुन्दरचक्रवर्ति (कलकता)भिस्त्रिभिर्विरचितेन सोपपत्तिकपीठिकात्रयेणांग्लभाषात्मकेनाप्यलंकृतस्य विद्यारण्य पञ्चानन विद्यारण्य वाचस्पतीत्यादिबिरुदभूषित विक्राल रामचन्द्राचार्यविरचितं जयघोषणाख्यं पीठिकारत्नं चासीत् । मद्विरचितविषयक्रोडीकरणाख्येनोपोद्घातेन च समलंकृतस्य तस्य ग्रन्थस्य

स्मृत्या मम मतिवैमत्यं सञ्जायते । अहो यस्मिन्ग्रन्थे प्राच्यपाश्चात्यदेशीयोभयविज्ञानानुसारेण बहवो विषया धर्म - नीति - सूक्ष्मप्रतिपादकाश्चासन् । यस्मिन् कपाल-भा-स्थि दृषदुल्लेखाद्यैः पाश्चात्यपद्धत्या आधिभौतिकसिद्धान्तरीत्या शैल्या युक्तायुक्तविचारणचारुसत्तर्कशब्दशक्तिसमन्वयपद्धत्या प्राच्यविज्ञानसम्मतरीत्या वाक्यार्थशैल्या च ऋतुमतीविवाहो दुर्नीतिदायकः प्रत्यवायजनकश्चेति सुदूरं विचारितो विनिश्चितश्चासीत् । तादृशो ग्रन्थराजो पाठकलोकदुरदृष्टवशात् ।

चित्तूरुनगरे श्रीश्रीश्री काञ्चीकामकोटिपीठस्वामिनां विजयसमये तद्दर्शनार्थं समागतस्यास्य कवेस्सकाशात्(कुतोपिन्यस्तो)विनष्टोभूदिति महदहो विषादस्थानम् । तदा पुनस्तन्निर्माणचतुरोऽप्ययं कविः प्रणतिपूर्वकं मया सम्प्रार्थ्यमानोपि 'कलौ कार्तयुगं धर्मं यो नरः कर्तुमिच्छति । स्वामिद्रोहीति मत्वा तमधः पातयते कलिरि'ति वचनमनुस्मरन् ततो व्यरंसीत् । इति मम ज्ञातचरो वृत्तान्तः खेदयति मां व्यतीतस्मृत्या । 'न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियं' इति गीतोक्तिमनुस्मरन्निश्चिन्तोयं ततो विरतोऽभूदेष वृत्तान्तोऽपद्कर्णस्समजनि । 'ततो दुर्लभ्या नियतिः पारमेश्वरी'ति लोकव्यवहाररङ्गान्निष्क्रान्तोऽयं शान्तमनाः पुनरपि—'असत्कीर्तनकान्तारपरिवर्तनपांसुलां । वाचं शौरिकथालापगङ्गयैव पुनीमहे' इति साधूक्तिमनुस्मरन्निव पाठकलोकभाग्यवशात् एतद्ग्रन्थरूपेण स्वीयां शेमुषीं हरिकथालापेन पवित्रीकुर्वन् पुनरपि व्यवहाररङ्गे समवतरदिति महान्प्रमोदहेतुस्तन्मित्रस्य मम । तथा सर्वेषामेतद्ग्रन्थपाठकानां चेति दिक् । परापरविद्यारसायनभूतमिमं ग्रन्थमवधार्य पाठकास्स्वीयमनीषास्वभावसंस्कारानुगुणेन ग्रन्थकारानुभावितमर्थं गृहीत्वा महान्तमानन्दमनुभवंत्विति

साञ्जलिबन्धं विज्ञाप्य विरमामि 'विस्तरशो मालिखे'ति मित्राज्ञामनुस्मरन्। तथापि श्रीभगवदनुधावनाख्यग्रन्थश्रवणतुष्टानामेतद्देशवासिनां मन्मित्राणां ग्रन्थविषयकानुमोदनश्लोकाः ।

'ग्रन्थं श्रीहरिभक्तिकल्पलतिकाकेदारखण्डायितं
जीवातुं जरदन्धपंगुबधिरप्रायाखिलप्राणिनम् ।
भक्तिज्ञानविरक्तिबोधमहितप्रासादनिश्रेणिका-
रूपं चेतसि भावयन्तु सुधियश्श्रद्धाळवस्साधवः' ॥

इति चिन हनुमप्पगारु, मल्लिकेश्वर अग्रहारं मैसूर् 'भगवदनुधावनात्मकवृत्तिं चित्तस्य सन्तनुते। भगवदनुधावनाख्या कृतिरेषा श्रोतृपठितॄणां' । इति आर्. नंजुंडप्पगारु मीमांसाशिरोमणि मैसूर् । चांमुण्डीनगर् । 'आन्ध्रभाषामयी स्वप्नवैभवाख्याकृतिरसतां । भक्त्युत्साहप्रसूनूनममन्दानन्ददायिनी ।' इति कारुपल्लि वेङ्कटेशशर्मा बि. ये. बि. यल्. साहित्यशिरोमणि मैसूर् ।

'श्रीवेङ्कटेशशतकं जनिसङ्कटवारणम् ।
ज्ञानभक्तिविरक्त्यादिजनकं मोक्षदायकम्' ॥

इति च—

'रम्यश्लोकसहस्रगीतभगवल्लीलाविशेषस्य म-
त्सख्युश्चाक्षरकायकल्पलतिकाशिल्पात्तदिव्याकृतेः ।
स्वप्नप्राप्तरमेशशङ्करमहाज्ञानोपदेशस्य स-
त्कृष्णाख्यस्य कवेर्गुणान्गणयितुं मन्दः कथं शक्नुयाम् ॥
राधामाधवपृष्ठधावनकृतिं श्रुत्वादितो मंजुलां श्रीकृष्णा(भिधः

'पण्डितायसुहृदे (पाठान्तरं) भिधनव्यादिव्यकवये) गेहे मदीये मुदा ।
राधाकृष्णपदाश्रयैर्बुधवरैर्मैसूर्महापत्तने राधाकृष्णपदाब्जदासबिरुदं दत्तं
महार्घं शुभम् ' ॥ इति मैसूर् 3 चामुण्डीनगर् 2/16 कौमुदी-
भवनम् ॥

के. शिवरामशास्त्री, यं. ये.
भवद्दर्शनाकांक्षी,
( ग्रन्थकर्तुरसमदुःखसुखस्सखा )
के. एम्. शास्त्री.
26—8—55.

श्री क. नटेशशास्त्रिभिः प्रदत्ता

॥ ग्रन्थाभिनन्दनपत्रिका ॥

भगवदनुधावनाख्या चम्पूश्श्रीकृष्णशास्त्रिणा रचिता ।
विद्वदनुमोदितैषा जीयादाचन्द्रतारकं भूमौ ॥

श्रीकृष्णपादपाथोजरोलम्बायितमानसः ।
श्रीकृष्णशास्त्रिरचितं दृष्ट्वा कृष्णानुधावनम् ॥

नटेशशास्त्री व्यलिखत् कडलंगुडिजन्मभूः ।
यदुनन्दनसंप्रीत्यै ग्रन्थामोदनपत्रिकाम् ॥

गोपालबालावृतपार्श्वदेशं आपादमौळ्यङ्कितपङ्कजालम् ।
दिक्पालवीचिक्षिपितात्मलीलं गोपालबालं वयमाश्रयामः ॥

नृत्यन्तमत्यन्तमुदञ्चितांघ्रिं मातुः पुरस्तान्नवनीतहेतोः ।
श्रुत्यन्तसङ्गीतनिजस्वरूपं बालं मुकुन्दं वयमाश्रयामः ॥

विन्यस्य वामहस्तं कट्यामुद्धृत्य दक्षिणं हस्तं ।
नवनीतार्थं मातुः पुरतो नृत्यन्तमाश्रये बालम् ॥

वैधवैष्णवमाहेशमूर्तित्रयमयं महः ।
सन्मयं चिन्मयं जीयादानन्दमयमद्वयम् ॥

श्रीराधाकृष्णदासः,
कडलङ्गुडि नटेशशास्त्री,
कस्तूरिरङ्गविलासः,
25-8-55—मांबळं, मद्रास्.

---

॥ श्रीमते रामानुजाय नमः ॥

## ॥ आमोदनम् ॥

फलसाधनभावोहि फलप्रतिसम्बन्धितासाहचर्याऽराधनाऽराधितो ज्यायान् । फलप्रतिसम्बन्धीतरयोः फलसाधकयोः फलश्रद्धौत्कट्य तदभाववैषम्यकृतफलसाधनप्रवृत्त्यौत्कट्य तदभाववैषम्यदर्शनात् । शक्तिविशेषश्च फलप्रतिसम्बन्धितासाहचर्याराधनोपोद्बलकः । अशक्तेषु प्रायेण फलप्रतिसम्बन्धितासाहचर्याराधनदौर्बल्यावगमात् । तेषु फल-व्यभिचारिफलप्रतिसम्बन्धितासाहचर्याराधनदृष्टेः । तदेवं शक्तिविशे-षोपबृंहितफलप्रतिसंबन्धितासाहचर्याऽराधनाऽराधितफलसाधनभाव - ज्यायस्त्वं स्थितम् । फलप्रतिसम्बन्धिता साहचर्याराधनाऽऽराधिताऽ-नाराधितवैषम्यमूल फलसाधनेषु फलसाधनभाववैषम्यं पुनर्न फलसाधन-प्रवृत्तिकर फलसाधनभावावगमाभिभावकम् । शक्त्यभावफलसाधन-

भावागममात्रप्रवर्तकतास्थितेः । उपदर्शितफलसम्बन्ध्यशक्त फल-साधन फलव्यभिचारो हि फलोपधानापेक्षित फलसामग्रीघटकफलसह-कारिवैकल्यौपाधिको न शक्त्यभावफलसाधनभावावगमप्रवर्तकताविघ-टकः। ततएव फलसाधकेतरेषु फलसाधनेषु बहुतराशक्तफलसाधक प्रवृत्त्युपलम्भः । शक्तिभ्रमौपाधिकीह्यशक्यप्रवृत्तिः। गुरुप्रयत्नसाध्येषु साधनेषु प्रवर्तकस्य साध्यसाधनभावस्य निर्णयान्ततापेक्षत्वेऽपि लघ्वा-यासससाध्येषु सम्भावनामात्रावधिरपि हि साध्यसाधनभावः प्रवर्तकः। अनुभवानुरोधात् । तदेवं फलसाधनभावमर्यादायां फलविशेषार्थि प्रवृत्तिविषयत्वफलसाधनत्वावगमयोरन्नेयोन्नायकभावस्थित इति भग-वदनुधावनमुखेन गुणवद्विषयमोक्षसाधनतावगमोन्नयनसम्भवः । ज्ञानशक्त्यादिविनाहेयैरित्यन्तं हि भगवच्छब्दवाच्यनिर्वचनं सगुण निर्गुणस्तुत्योर्मङ्गलहेयगुणविषयतया विभागं व्यञ्जयत् श्रुत्यन्तराऽ-विरोधेन गुणवद्विषयतां भगवच्छन्दस्यानुशास्ति । गुणवदनुधावनानु-धाविनश्च गुणएवेत्यनुधावितगुण भगवदनुधावनामोदनं विषयवैलक्षण्य ज्ञानाधीनप्रीतिकारितमस्मदीयमावेदयामः । इति ॥

आसूरि. रामानुजाचार्यः
चतुस्तन्त्रनिष्णातः
श्री पेरुम्बूदूर्.

श्रीभूतपुरीसंस्कृतकलाशालाध्यापकेन व्याकरणालङ्कार-
वेदान्तविशारदादिनानाविरुदोपशोभितेन

## ब्रह्मश्री - रामचन्द्रशास्त्रिणा शिरोमणिना वितीर्णाऽभि-
## नन्दनपत्रिका ॥

समुन्मिषितभागधेया वयं "भगवदनुधावनं" नाम काव्यं निर्वर्णयितुमवकाशमलप्स्महि ।

'कति कवयः कति कृतयः कति लुप्ताः कति चरन्ति कति शिथिलाः तदपि प्रवर्तयति मां शङ्करपारम्यसङ्कथालोभः' इतीमां श्रीमतो नीलकण्ठदीक्षितस्य सूक्तिमनुसन्दधानेन काकयाकाग्रहारवास्तव्येन श्रीकृष्णशास्त्रिणा यदिदं भगवदनुधावनाभिधस्य चम्पूप्रबन्धस्य प्रणयनसाहसमङ्गीकृतम् । तेन मन्यामहे सुदूरमुपकृतो लोक इति । विरला हि जगति चम्पूप्रबन्धाः । चम्प्वन्तरविलक्षणा चास्य कृतिः ललितपदविन्यासैः मञ्जुलसरसवाग्विलासैश्च परिमिताऽलङ्कारापि यूनामिव रमणी हरति मनांसि सुमनसाम् । कविरयं भाग्यवशात् अवाप्तसरस्वतीप्रसादः । स च निसर्गमनोहरां आत्मनः कवितां भगवद्गुणवर्णने विन्ययुङ्क्तेति महदिदं प्रमोदस्थानम् । स्वयं पूताऽस्य वाक् पवित्रयति पठितॄन् । कदाचित् स्वप्ने भगवन्तमद्राक्षीत् । तं च जिघृक्षुः द्रवन्तं तमनुदुद्राव इति स्वाप्नी संकुचिता कथेह । सा च कृतिपतेः कस्यचिद् अग्रतो निगद्यते । स च कृतिपतिः श्रीकामकोटिपीठाधिपतिरत्रेति विशिष्य तस्मिन् जगद्गुरावस्य भक्तिः प्रकाश्यते । मध्ये मध्ये विस्फुरन्ती भाग-

चतस्य छाया कवेरस्य परिचयमादरञ्च तत्र विद्योतयति । इतिहास पुराणादिष्वपि कृतपरिश्रमो विभाव्यतेऽसौ । नानाक्षेत्राटनचतुरः तत्रत्य विद्वज्जनसौहार्दभाजनञ्चाऽयं देशभाषामयान् व्याख्यानसंख्यान् स्वकृतावुल्लिखन् "रेडियो" "ब्राड्कास्ट्" प्रभृति भाषान्तरपदान्यपि प्रयुञ्जानो व्यञ्जयति बहुश्रुततामात्मनः । "वनौकसोपि सन्तः लोकज्ञाः वय" मिति कण्वमुखेन कालिदाससूचिता अवश्यसम्पाद्या लोकज्ञताप्यनेन समासादिता । स्थाने चेदम् ।

"न तत्काव्यं न तच्छास्त्रं न स न्यायो न सा कला ।
जायते यन्न काव्याङ्गमतो भारो महान्कवेः ॥"

ईदृशानि परश्शतानि काव्यानि विरचयन् आनन्दयतु विबुधान्, उत्तारयतु च प्राकृतानयं कविः इत्याशास्महे ॥

काव्यं कवेरस्य मनोहरं गुणान् स्तुवद्भिरैः साधुजनाभिनन्द्यम् ।
पूतं स्वयं पूततमान् वितन्वन् जीयात् समा द्रष्टृजनाननन्ताः ॥

नम्रस्य मूर्धनि रथाङ्गकरस्य सक्ता तच्चन्द्रचूडसनता विचिकीर्षयेव ।
अव्यात्कलेव शशिनः प्रतिभासमाना शम्भोःप्रदीप्रचरणांगुलि-
कौमुदी सा ॥

इत्थं विद्वद्वशंवदः,
**रामचन्द्रशास्त्री.**
27-8-55.

श्री कृष्णशास्त्रिमहाशयैर्विरचितमान्ध्रगीर्वाणप्रबन्धद्वयमामूलचूडमपश्यं । एतेषां गीर्वाणभाषायामेव कविताशक्तिरिति भ्रान्तिरिदानीं भाषयोरुभयोरपि तुल्यां कविताधारामवलोक्य पर्यत्याजि ॥

परिचितैवैतेषां कविताधोरणिरेतदीयकाफीवृत्तग्रंथमवलोकितवताम् ॥

एकस्मिन्नेव विषये तत्तद्भाषानुगुण्येन काव्यरचनमेतेषां सामर्थ्यं प्रदर्शयति ॥ अयमत्र विशेषः । यत्प्राचीनाः कवयः स्वकालनिर्णयोपयोगिनं कमपि विशेषं स्वग्रंथेष्वनिबध्य चारित्रकापकारमकार्षुः । एते तु स्वकालीनानां पण्डितानां धनिकानां नेतॄणां स्वबन्धूनां नामान्युल्लिख्य स्वस्यैवान्येषां सकलपण्डितानां कालनिर्णये चारित्रकाणामुपकारमकार्षुरिति महान्विशेष इति शं (काञ्चीमण्डलशूलमेन्यग्रहारवासी.

गोडा - सुब्रह्मण्यशास्त्री.)

(तर्कवेदान्ताचार्यः) 5-9-55.

---

## श्रीभूतपुरीस्थसंस्कृतमहाकळाशालाध्यापकवर्यैः प्रदत्ता आमोदनपत्रिका ॥

श्रीमतः विद्वत्कवेः काकवाकाग्रहाराभिजनस्य श्रीकृष्णशास्त्रिणः कृतिं भगवदनुधावनं नाम काव्यं अवालोकयाम । स्वभावमधुरा ललिताऽस्य कविता । सापि भगवतः गोपवेषस्य विष्णोः गुणगणवर्णने विनियुक्ता सहृदयानां मनांसि सुदूरमानन्दयति । भक्तिमार्गः स्पष्टीकृतः अत्र काव्ये । भक्तिवर्धनाय भगवदनुग्रहलाभाय च ग्रन्थोऽयं विश्वजनीनादरार्हः इति विश्वसिमः ॥

N. Seshadri Ayangar,
Principal. 27-8-55.

T. Ramachandra Sastri, Professor.
M. S. Shanmukam, Professor.

## ॥ श्रीरामजयम् ॥

यस्. आर्. कृष्णमूर्तिशास्त्री, न्यायवेदान्त-
शिरोमणिः उपाध्यायः मद्रास्. संस्कृतकलाशाला ॥

भगवदनुधावनाख्यं ग्रंथरत्नं । भगवन्तं प्रतिपित्सूनां सांसारिक-विक्षेपकवात्यया निरवलम्बं धावितुमशक्नुवतां महदालम्बनं भवति । इत्येतत् प्रत्यक्षीकुर्वतो मम अपरोक्षं । किंच इदमनुधावनं न. श्रुति-स्मृतिकुसुमानि मर्दयति । न च तर्कपाषाणादिषु स्खलति इति सर्वेषां आस्तिकानां अद्वितीय निरतिशयानन्दरूपं - ब्रह्म - बुभूषतां महत् आलम्बनं भवतीति नात्युक्तिः ।

इत्थं,

एस्. आर्. कृष्णमूर्तिशास्त्री.

10-9-1955.

## ॥ एकश्लोकात्मक भगवदनुधावनम् ॥



स्वप्ने नीलमहोन्तरे भगवतः कृष्णस्य सन्दर्शनम्
भक्त्या तत्स्तवनं ततो भगवतो भक्ष्यादियाच्ञा स्वयम्
प्रेम्णा भक्ष्यसमर्पणे सति हरेस्तूर्णीं तदा(तो)धावनम्
भक्तस्याप्यनुधावनं हरिकृपावाप्तिश्च मोक्षोऽन्ततः ॥

॥ श्रीः ॥

श्रीराधारमणः शरणम्

# यत्किंचिदिदं श्रीभगवदनुधावननाम्नः प्रबन्धस्य प्रास्ताविकम्

सच्चित्सुखात्मकं शान्तं जगतामेककारणम् ।
मामव्यान्मामकं ज्योतिरान्तरं सर्वदेहिनाम् ॥
विवक्षितार्थविज्ञप्त्यै वन्दे विद्याधिदेवताम् ।
विद्वन्मानसहंसीं तां वाणीं वीणाविनोदिनीम् ॥
प्रह्लादनारदपराशरपुण्डरीक-
व्यासाम्बरीषशुकशौनकभीष्मदाल्भ्यान् ।
रुक्मांगदार्जुनवसिष्ठविभीषणादीन्
पुण्यानिमान् परमभागवतान् नमामि ॥

**अयि भोः सहृदयाः!**

प्रगीतं हीदमन्यतमं श्रूयते श्रीमद्भागवते पुरुषोत्तमगुणानुबन्धिनि पुराणसारे - गोपिकागीतेषु यथा —

तव कथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहम् ।

श्रवणमङ्गलं श्रीमदाततं भुवि गृणन्ति ते भूरिदा जनाः ॥ इति प्रतीतचर एव चास्या गीतेरर्थः समैर्विपश्चिद्पश्चिमैर्यथा — 'सर्वं वाक्यं सावधारणं' इति न्यायेन भगवतस्तव श्रीकृष्णस्यैव, कथैवामृतं

नान्यत् प्रसिद्धमतिनिकृष्टं, आध्यात्मिकादितापत्रयतप्तानां सर्वप्राणिनां जीवनाशाप्रदं, तापहेतुभूतसर्वप्रकारकल्मषाणामपहतिकारणं, यतः श्रवण-मात्रेण तत् सर्वेषां मङ्गलप्रदं, 'सा हि श्रीरमृता सताम्' इत्युक्तलक्षण-श्रीमत् सुशान्तं, आततमतिविस्तृतं वाङ्मनसातिगम्, यत एवमत एव ब्रह्मविद्भिः क्रान्तदर्शिभिर्महर्षिभिः स्वतपोमहिमलब्धैर्नित्यैर्वचोभिरभिष्टुतं भुवि त एव परवैराग्यभक्तिसम्पन्नाः प्राग्भवे भूरिदा एव जना नान्ये निरूपयन्ति प्राप्नुवन्ति वा प्राक्कृतपुण्यकर्मपुञ्जपरिपाकवशेन इति । न केवलमिदं यावदिदमपि श्रूयते —

स्मृते सकलकल्याणभाजनं यत्र जायते ।
पुरुषस्तमहं नित्यं व्रजामि शरणं हरिम् ॥ इति

निवृत्ततर्षैरुपगीयमानात्
भवौषधाच्छ्रोत्रमनोऽभिरामात् ।
क उत्तमश्लोकगुणानुवादात्
पुमान् विरज्येत विना पशुघ्नात् ॥ इति च ॥

किमत्र निदानम्? इदमेवात्र निदानं यत् श्रियःपतेरादिपूरुषस्य भगवतो नारायणस्यावतारेषु परिपूर्णतमावतारोऽयं भगवान् श्रीकृष्ण एवेति । भवतु परमस्य पुंसोऽस्य गुणादिचिन्तनं यावन्नाममात्रमपि श्रोत्रपुटैरनि-शमापीयमानं चर्व्यमाणं च रसनापुटैः शृण्वतां रसयितॄणां च मनस्य-दृष्टाश्रुतचरमधुरिमोत्पादनेनामन्दमानन्दमुपजनयति । तदाह पण्डित-राजः श्रीजगन्नाथोऽपि —

मृद्वीका रसितासिता समशिता स्फीतं निपीतं पयः
स्वर्यातेन सुधाप्यधायि कतिधा रम्भाधरः खण्डितः ।
तत्त्वं ब्रूहि मदीयजीव भवता भूयो भवे भ्राम्यता
कृष्णेत्यक्षरयोरयं मधुरिमोद्गारः क्वचिल्लक्षितः ॥इति॥

को हि नाम भगवान् ?

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥

इत्यभियुक्तोक्तषाड्गुण्यलक्षणभगवान् यः स एव वक्तव्यो भगवानिति निर्विवादसिद्ध एवायमर्थः ।

तत्त्वं च भगवतः श्रीकृष्णादन्यत्रावतारे मत्स्यादौ सुसम्पूर्णतां नैवोपगन्तुमलमिति किञ्चिदेवालोचयतामपि सुधियां करतलामलककल्पं प्रतिभायादेवेति नात्र बह्वभिनिवेष्टव्यम् । तथापि यत्किञ्चिदिदमा-सूच्यतेमत्स्यादिषु तावत्कलावतीर्णेषु समग्रैश्वर्याद्यनेकायोगः स्पष्ट एव । वामने वीर्याद्ययोगः । हलिभार्गवयोर्वीर्यातिरिक्तायोगः । नरसिंहे श्रीरामे तु समग्रैश्वर्यायोगः । बुद्धेऽपि ज्ञानवैराग्यातिरिक्तायोगः । भगवति श्रीकृष्णे तु समग्रसंपत्तिरिति तद्दिव्यचरितावेदकब्रह्मसंहिताब्रह्म-वैवर्तगर्गसंहिताहरिवंशश्रीमद्भागवतादिग्रन्थानुशीलिनां स्पष्टमेव ।

उत्पत्तिमायतिं स्थानं भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

इत्यभियुक्तोक्तिलक्षणं भगवल्लक्षणं तु भगवति श्रीकृष्ण एव समञ्जसं नान्यत्रेति तु सर्वमेव गीतार्थमापाततः विशिष्य च —

| | अ. | श्लो. |
|---|---|---|
| न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।<br>न चैव न भविष्यामः सर्वे वयमतः परम् ॥ | 2 | 12 |
| वेदाहं समतीतानि वर्तमानानि चार्जुन ।<br>भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ | 7 | 26 |
| अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।<br>अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ | 2 | 28 |
| बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।<br>तान्यहं वेद सर्वाणि न त्वं वेत्थ जनाधिप ॥ | 4 | 5 |
| अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।<br>प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ | 4 | 6 |
| यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।<br>ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ | 4 | 37 |
| ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।<br>यद् ज्ञात्वा नेह भूयोऽन्यत् ज्ञातव्यमवशिष्यते ॥ | 7 | 2 |
| दैवी ह्येषा गुणमयी मम माया दुरत्यया ।<br>मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ | 7 | 14 |
| शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।<br>एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ | 8 | 26 |

इत्यादिश्लोकार्थं परामृशतामतिरोहितमेव ।

अत एव मधुसूदनसरस्वतीश्रीचरणाः श्रुतिशिरोवचननिर्वचन धुरन्धरा अपि भगवति श्रीकृष्णस्वरूप एव स्वस्यासाधारणं प्रीतिविशेषमावेदयन्ति— 'कृष्णात्परं किमपि तत्त्वमहं न जाने' इत्यादिना ।

ध्यानावस्थिततद्गतेनमनसायन्निर्गुणंनिष्कळम्
ज्योतिःकिञ्चननिष्क्रियं निरुपमंपश्यन्तिपश्यन्तुते ।
अस्माकन्तु तदेवलोचनचमत्काराय भूयाच्चिरम्
कळिन्दीपुळिनेषुयत्किमपितन्नलं महोधावति ॥

भगवद्भक्तिरसायनेऽप्याहुः —

नवरसमिळितं वा केवलं वा पुमर्थं
परममिह मुकुन्दे भक्तियोगं वदन्ति ।
निरुपमसुखसंविद्रूपमस्पृष्टदुःखं
तमहमखिलतुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि ॥ इति ॥

न केवलमेत एवान्येऽपि हि संख्यातिगाः संख्यावन्तः श्रीजयदेवप्रभृतयः श्रीकृष्णभक्तिपरवशीकृतस्वान्तास्तन्नामरूपानन्तकल्याण - गुणपूगकीर्तनानुस्मरणदर्शनचिन्तापरायणाः स्वस्वानुभूतार्थाविष्करण - चणानि प्रत्नानि प्रबन्धरत्नानि गीतगोविन्दमुखानि निरमासत । शृण्वन्तु श्रीजयदेवकविवरप्रणीतमिदं पद्यरत्नम् । यथा —

"यदि हरिस्मरणे सरसं मनो
यदि विलासकलासु कुतूहलम् ।
मधुरकोमलकान्तपदावळीं
शृणुत भो जयदेवसरस्वतीम् ॥ स० १, श्लो० ३ ॥"

किमिदं स्वौद्धत्यप्रकाशनमात्रफलं यतः स्वभणितं स्वयमेव प्रस्तौति श्रीजयदेवोऽपि। यद्यपीत्थं मन्दभागानां स्यान्मतिः तथापि सेत्थं सुधीभिः सुपरिपक्वमतिभिः पराकर्तव्या — यदाहाचार्यदण्डी स्वलं - कृतिनिबन्धे काव्यादर्शे 'स्वक्रियाविष्क्रिया दोषो नात्र भूतार्थशंसिनः' इति। भूतार्थवचनमेवेदं श्रीजयदेवस्येतीह विषये शृणुतेदमैतिह्यं श्री - मच्चन्द्रदत्तकृतभक्तमालाप्रस्तुतं यथा —

एकदा ह्येको नरपतिर्जयदेवकृतं गीतगोविन्दमुपश्रुत्यातिहृष्ट-स्वान्तरङ्गोऽप्यसूयाविष्टचेतास्तत्काव्यं स्वनिकट एवान्तर्धाप्य स्वयमेव च तादृशं नूनं किञ्चिन्निर्माय काव्यं यशोलिप्सया तदेव तदाप्रभृति सर्वैः पठनीयं पाठनीयं गातव्यमधिगाप्यं चेति सर्वान् स्वनिदेशवर्तिनो विदुषोऽन्यांश्चादिदेश, विपक्षे दण्डमप्यतिक्रूरम्।

अथैकदा स नृपतिः श्रीमतः पुरुषोत्तमस्य दर्शनमभिकांक्षंस्त - न्मन्दिरमुपागतस्तत्र श्रीजयदेवं स्वकृतमेव गीतगोविन्दमुपगायन्तमर्चयन्तं नृत्यन्तं च दृष्ट्वाह — अहो! किमिति भवान् भवदीयमेव काव्यं स्वीकरोति न मदीयमिति। तं ह्येवं प्रतिजगाद श्रीजयदेवः। ननु भो राजन्! अङ्गीकृतमेव मया भवदीयं गीतगोविन्दम्। परं तु भगवान् गोविन्दः श्रीपतिः पुरुषोत्तमो न तत्स्वीकरोति नापि तेन परि-तुष्यति तथा यथा मदीयं स्वीकरोति मदीयेन वा परितुष्यतीति। तत्परीक्षणकृतक्षणस्स भूपालः सामात्यपरिवारो द्वयमपि तत्काव्यं पुरु षोत्तमस्य भगवतः श्रीकृष्णस्य पुरत एव संस्थाप्य, अयि भोः स्वामिन्! यदनयोर्भवतोऽभीष्टतरं तदुपर्यन्यच्चाधस्तात् स्वयमेव भवान् स्थापयतु

सर्वेऽपिवयं यामो बहिर्गृहादित्युक्त्वा अनुष्ठाय च तथा तदनु कवाट-मुद्घाट्य सपरिवारः सजयदेवश्च स यावदभ्यन्तरं प्रविष्टस्तावदध्यक्षी-चकार स्वीयमधस्तनं जयदेवकृतं चोपरितनं काव्यम् ।

ततः शोकाकुलमनास्स नरदेवोऽन्नं पानीयं च परित्यज्य तत्रैव देवागारे रात्रौ तस्थिवान् सुषुप्तश्च यावत्तावदेव देवेन भगवता श्रीकृष्णेनैवं स्वप्ने प्राबोधि अयि नृपाल! मा वृथात्वं शुचो यतः श्रीजयदेवकृतमेव काव्यं गीतगोविन्दं प्रीणयति मामतिवेलं नान्यत् परमिदमपि शृणु तुष्य च त्वं यद्भवदीयमपि प्रीतकरमेव मम काव्यं गीतगोविन्दम् । यथैव स्वीकृतं जयदेवेन भावकं काव्यं तथा तदीयमपि त्वया स्वीकार्यमेव । न चालं स्वीकरणमात्रेण, परितः प्रख्यापनीयमपि तद्यतोऽदो मेऽतिप्रेमास्पदमिति ।

तदनु च प्रतिबुद्धस्स नरपालोऽतिवेलमानन्दमनुभूय प्रणम्य परमात्मानं, क्षमापय्य स्वापराधं, प्रपद्य श्रीजयदेवं, प्रख्याप्य च तत्कृतं गीतगोविन्दं, परिपठ्य च स्वयं कृतार्थो बभूवेति ।

किमत्र कारणम्? भक्तिप्रकर्ष एव । का नाम भक्तिः? भक्तिर्हि नाम सा या भगवद्धर्माद्द्रुतस्य मनसः सर्वेशे भगवति मुकुन्दे धारावाहिनी वृत्तिः नृणां निःश्रेयससाधनभूता च । अस्याः श्रेयस्साधनत्वमुक्तं यथा —

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ इति ॥

स्वरूपादिकं चोक्तं सप्रपञ्चंभगवद्भक्तिरसायने यथा —

द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता ।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥ अ.1श्लो. 3

व्यञ्जको वा यथा लोके व्यङ्ग्यस्याकारतामियात् ।
सर्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते ॥ ,, 1,,22

चित्तद्रव्यं हि जतुवत्स्वभावात्कठिनात्मकम् ।
तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते ॥ ,, 1,, 4

कठिना शिथिला वा धीर्न गृह्णाति न वास्यते ।
उपेक्षज्ञानमित्याहुस्तद्बुधाः प्रस्तरादिषु । ,, 1,,29

शिथिलीभावमात्रं तु मनो गच्छत्यतापकैः ।
न तत्र वस्तु विशति वासनात्वेन किञ्चन ॥ ,, 1,, 7

काठिन्यं विषये कुर्याद् द्रवत्वं भगवत्पदे ।
उपायैः शास्त्रनिर्दिष्टैरनुक्षणमतो बुधः ॥ ,, 1,,30

कामक्रोधभयस्नेहहर्षशोकदयादयः ।
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनं (तु तत्) भवेत् ॥,, 1,, 5

गृह्णाति विषयाकारं मनो विषययोगतः ।
इति वेदान्तिभिस्सांख्यैरपि सम्यङ्निरूपितम् ॥ ,, 1,,20

मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ।
घटादि व्याप्नुवच्चित्तं तन्निभं जायते(ध्रुवम्)द्रुतम् ॥ ,, 1,,22

द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुना ।
संस्कारवासनाभावभावनाशब्दभागसौ ॥ ,, 1,, 6

द्रवतायां प्रविष्टं सत् यत्काठिन्यदशां गतम् ।
चेतः पुनर्द्रुतौ सत्यामपि तन्नैव मुञ्चति ॥ अ. 1 श्लो 8

बाह्यपिण्डस्य नाशेऽपि तिष्ठत्येव मनोमयः ।
अतः स्थायीति विद्वद्भिरयमेव निरूपितः ॥ ,, 1 ,, 26

स्थायिभावगिरातोऽसौ वस्त्वाकारोऽभिधीयते ।
व्यक्तश्च रसतामेति परानन्दतया पुनः ॥ ,, 1 ,, 9

भगवान्परमानन्दस्वरूपः स्वयमेव हि ।
मनोगतस्तदाकारो(र) रसतामेति पुष्कलम् ॥ ,, 1 ,, 10

अथेयं भक्तिभूमिका —

प्रथमं महतां सेवा तद्दयापात्रता ततः ।
श्रद्धाथ तेषां धर्मेषु ततो हरिगुणश्रुतिः ॥ ,, 1 ,, 32

ततो भक्त्यंकुरोत्पत्तिः स्वरूपाधिगतिस्ततः ।
प्रेमवृद्धिः परानन्दे तस्याथ स्फुरणं ततः ॥ ,, 1 ,, 33

भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता ।
प्रेम्णोऽथ परमा काष्ठेत्युदिता भक्तिभूमिका ॥ ,, 1 ,, 34

उल्लास II

चतुर्विधा त्रिविधा चेयं चक्तिः । यथा —

राजसी तामसी शुद्धसात्विकी मिश्रिता च सा ।
ईर्ष्याजद्वेषजाद्या स्याद्भयजद्वेषजा परा ॥ 41

हर्षजा शुद्धसत्त्वोत्था कामशोकादिजेतरा ।
सत्त्वजत्वे तु सर्वासां गुणान्तरकृता भिदा ॥

भक्तिश्चतुर्विधाप्येषा भगवद्विषया स्थिरा ।
दृष्टादृष्टोभयैकैकफला भक्तिस्त्रिधा भवेत् ॥

राजसी तामसी भक्तिरदृष्टफलमात्रभाक् ।
दृष्टादृष्टोभयफला मिश्रिता भक्तिरिष्यते ॥

शुद्धसत्त्वोद्भवाप्येवं साधकेष्वस्मदादिषु ।
दृष्टमात्रफला सा तु सिद्धेषु सनकादिषु ॥

वर्तमानतनुप्राप्यं फलं दृष्टमुदाहृतम् ।
भाविदेहोपभोग्यं यत्तददृष्टमुदीरितम् ॥

कुतः —

रजस्तमोऽभिभूतस्य दृष्टांशः प्रतिबध्यते ।
शीतवातातुरस्येव नादृष्टांशस्तु हीयते ॥

रजस्तमःप्रचण्डत्वे सुखव्यक्तिरसत्समा ।
तीव्रवायुविनिक्षिप्तदीपज्वालेव भासते ॥

रजःप्रबलसत्त्वांशादीर्ष्याजद्वेषमिश्रिता ।
मनोवृत्तिः परानन्दे चैयस्य न सुखायते ॥

तमःप्रबलसत्त्वांशाद्भयजद्वेषमिश्रिता ।
मनोवृत्तिः परनन्दे कसस्य न सुखायते ॥

तयोर्भाविशरीरे तु प्रतिबन्धक्षये सति ।
सैव चित्तद्रुतिर्भक्तिरसतां प्रतिपद्यते ॥ 55

अधुनापि भजन्तो ये द्वेषात्पाशुपतादयः ।
तेषामप्येवमेव स्यादथवानेन तुल्यता ॥ 56

रजस्तमोविहीना तु भगवद्विषया मतिः ।
सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते ॥ 58

दृष्टादृष्टफला भक्तिः सुखव्यक्तेर्विधेरपि ।
निदाघदूनदेहस्य गङ्गास्नानक्रिया यथा ॥ 47

रजस्तमस्समुच्छेदतारतम्येन गम्यते ।
तुल्येऽपि साधनाभ्यासे तारतम्यं रतेरपि ॥ 60

तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते ।
स्नात्वा भुक्तवतां भूयो गङ्गायां क्रीडतां यथा ॥ 49

द्रुतौ सत्यां भवेद्भक्तिरद्रुतौ तु न किञ्चन ।
चित्तद्रुतेरभावेन वेनस्तु कतमाऽपि न ॥ 57

रतिर्देवादिविषया व्यभिचारी तथोर्जित ।
भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥ 75

देवान्तरेषु जीवत्वात्परानन्दाप्रकाशनात् ।
तद्योज्यं परमानन्दरूपे न परमात्मनि ॥ 76

क्रोधशोकभयादीनां साक्षात्सुखविरोधिनाम् ।
रसत्वमभ्युपगतं त्वयानुभवमात्रतः ॥ 79

तथानुभवसिद्धोऽयं सहस्रगुणितो रसः ।
जडेनेव त्वया कस्मादकस्मादपलप्यते ॥ 80

## उल्लास III

ननु कोऽयं रसो नाम किंनिष्ठो वा भवेदसौ ।
अस्य प्रत्यायकः को वा प्रतीतिरपि कीदृशी ॥ 1

विभावैरनुभावैश्च व्यभिचारिभिरप्युत ।
स्थायी भावस्सुखत्वेन व्यज्यमानो रसः स्मृतः ॥ 2

सुखस्यात्मस्वरूपत्वात्तदाधारो न विद्यते ।
तद्व्यञ्जिकाया वृत्तेस्तु सामाजिकमनः स्मृतम् ॥ 3

गुणालंकाररीतीनां भावानां च निवेदकः ।
तस्य प्रत्यायकः शब्दो वृत्त्या व्यञ्जनरूपया ॥ 20

वृत्तिः कार्यपरोक्षास्य शब्दस्य सुखगर्भिणी ।
दशमस्त्वमसीत्यादिवाक्योत्थमतिवृत्तिवत् ॥ 21

नित्यं सुखमभिव्यक्तं 'रसो वै स' इति श्रुतेः ।
प्रतीतिः स्वप्रकाशस्य निर्विकल्पसुखात्मिका ॥ 22

बोध्यनिष्ठा यथास्वं ते सुखदुःखादिहेतवः ।
बोद्धृनिष्ठास्तु सर्वेऽपि सुखमात्रैकहेतवः ॥ 5

ज्ञातस्वपरसम्बन्धादन्ये साधारणात्मना ।
अलौकिकं बोधयन्ति भावं भावास्त्रयोऽप्यमी ॥ इति ॥ 11

अत्रेदमवधानीयम् — नेयं भक्तिर्ब्रह्मविद्यैव । स्वरूपसाधनफला-धिकारिवैलक्षण्यात् ।

1. द्रुतिपूर्विका भगवदाकाराकारिता सविकल्पकवृत्तिरूपा भक्तिः ।
   अद्रुतिपूर्विकाऽद्वितीयात्ममात्रगोचरा निर्विकल्पकवृत्तिरूपा ब्रह्म-विद्या ।

2. भगवद्गुणगरिमग्रन्थनरूपग्रन्थश्रवणादि भक्तिसाधनम् ।
   तत्त्वमस्यादिमहावाक्यश्रवणादि ब्रह्मविद्यासाधनम् ।

3. भगवद्विषयकप्रेमप्रकर्षो भक्तिफलम् ।
   सर्वानर्थमूलाज्ञाननिवृत्तिर्ब्रह्मविद्याफलम् ॥

4. प्राणिमात्रस्य भक्तावधिकारः ।
   साधनचतुष्टयसम्पन्नस्यैव ब्रह्मविद्यायामधिकारः । इति ।

तदेतादृशभगवद्भक्तिपरवशीकृतस्वान्तरङ्गः कश्चित्कविवरो भज-नीयसमाननामा अनवरतकृतश्रीकृष्णभावनस्तत्प्रकर्षातिशयलब्धश्रीकृष्ण-स्वप्नसाक्षात्कारः स्वामी स्वानुभूतिमनुस्मरन्निबबन्ध श्रीबालगोपालानु-धावनाद्यपरनामधेयां श्रीभगवदनुधानननाम्नीं कामपि कृतिम् ।

सुगृहीतनामधेयस्यास्य कवेरभिजनदेशकालस्वरूपाद्यवगमविषये नास्माभिरतितरां यत्न आस्थेयो यतः स्वयमेव कविनात्र स सर्वोऽपि विषयः स्फुटतरमेवोपनिबद्धः । यथा —

श्रीकृष्णाभिधानोऽयं कविवरः पञ्चद्राविडान्तर्विभागभूतान्ध्र-भूसुरवेगिनाडुवंशप्रभव आत्रेयगोत्रः श्रीगङ्गाधरश्रौतिनां प्रपौत्रः सुब्रह्मण्यश्रौतिनां पौत्रः श्रीवेङ्कटकृष्णश्रौतिसुब्बलक्ष्म्यम्बयोः पुत्रः सौजन्य-सौशील्यादिगुणगणभूषिताया जानकीनाम्न्याः सीमन्तिन्याः प्रियभर्ता वेमूरिगेहाभिधश्रीनरसिंहशास्त्रिशूलमेनिश्रीगोडाकृष्णशास्त्रिकालिदास श्रीवेङ्कटसुब्बाशास्त्रिप्रमुखानेकगुरुलब्धसद्विद्यः श्रीमदुमारमणकरुणा-समासादितानवद्यहृद्यमृदुपद्यकविताभूषणः श्रीनन्दनन्दनपदारविन्दभजनानन्दैकतुन्दिलहृदयः वरिवस्यापरितोषितसाधुबृन्दः श्रीकाञ्चीकामकोटियतिराडास्थानविद्वन्मण्डलीकिङ्करः श्रीकाञ्चीमण्डलमण्डनायमानाष्टशताग्रहारान्यतमकाकवाकाग्रहाराभिजनोऽपि श्रीकाञ्च्या उत्तरभागे (36 miles मैल्) कालहस्त्याख्यक्षेत्रस्य दक्षिणभागे (5 miles मैल्) चेन्नपुर्या वायव्यभागे (36 miles) तिरुपतिक्षेत्रस्य प्राच्यभागे (32 miles मैल्) चेन्नपुर्यास्तिरुपतिक्षेत्रगमनार्थमहारथ्यामध्ये आरणी-नद्यास्तीरे च विराजमाने कालकूटाशनक्षेत्रमिति वल्मीकेश्वरमिति च स्कन्दपुराणप्रथिते शैवसमयाचार्यचतुष्टयान्यतमश्रीसुन्दरमूर्त्याख्य शिव-भक्ताग्रेसरप्रस्तुते सुरटिपल्लयाख्यसुक्षेत्र एवानवरतकृताधिवासः स्वकृत-तत्रत्यशिवालयोद्धारःपरमोपशान्त्याक्रियमाणकालयापनः श्रीशङ्कररामा-नुजकृष्णचैतन्यादिमतानुशीलनप्रमुदितहृदयः "शैवा वयं न खलु तत्र विचारणीयं पञ्चाक्षरीजपपरा नितरां तथापि। चेतो मदीयमतसी कुसुमावभासं स्मेराननं स्मरति गोपवधूकिशोरम्" इत्युक्तयेन अनवरत-

शिवाराधनतत्परोऽपि पञ्चाक्षरीजापनुशीलनबद्धश्रद्धोऽपि प्राक्सञ्चितपुण्य-पुञ्जपरीपाकप्ररूढदृढभावनाभावितभगवत्स्वरूपः पञ्चपञ्चाशदधिकपञ्च-साहस्रपरिमिते कलिवर्षे जये चैत्रे शुक्ले नावमिके तिथौ निशान्तदृष्ट-स्वप्नसञ्जातहर्षोत्पुलकाङ्गयष्टिः पुनः प्रबुद्धः स्वाप्नस्वानुभवावेदकमिमं प्रबन्धं स्वप्रत्यभिज्ञाबलोपनीतं निबबन्ध भक्तजनमनोल्लासाय केवलं न पूर्वोत्तरतन्त्र सिद्धान्तसिद्धार्थोपमर्दाय। यदाह स्वयमेवासौ ग्रन्थान्ते—

तर्कव्याकृतिपूर्वतन्त्रविदुषां नाप्यत्र वेदान्तिनां
योगध्यानविदां च कर्मठततेस्तोषाय वा यत्यते।
ये तु श्रीहरिनामकीर्तनरताः श्रद्धालवः साधवः
तानुल्लासयितुं कृतां कृतिमिमां पश्यन्तु निर्मत्सराः इति॥

अन्यथा हि कथमत्रैव निबन्धे पूर्वोत्तरतन्त्रसिद्धान्तसिद्धान-र्थान् पौनः पुन्येन उपनिबध्नीयात् कविरित्यन्यदेतत्।

अत्र यत् किञ्चिदिदं प्रासङ्गिकं प्रस्तूयते। कः स्वप्नः। स किं तथाभूतोऽथवा— तथाभूत तत्रः कथं भावनाप्रसङ्गः। तदयोगे वा कथं साक्षात् कृतिः। भवन्ती वा कथं प्रामाणिकी इति।

स्वप्नो हि नाम सः यत्र यथार्कस्य मरीचयोऽस्तं गच्छतः सर्वा-स्तेजोमण्डल एकीभवन्त्येवं सर्वाणीन्द्रियाणि परे देवे मनस्येकीभवन्ति

न चैव शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायतेऽथ च महिमानं कञ्चनानुभवति।

यत्स्थानो वासावात्मान्तःप्रज्ञ एव सन् प्रविविक्तमेव भुङ्क्ते विषयजातमुच्यते च तैजस इति।

यत्र चासौ स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेतान्प्राणान् गृहीत्वा स्वे शरीरे यथकामं परिवर्तते। (बृह-2-1-18)

यत्र वैषोऽस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा ज्योतिषा प्रस्विपिति।

यत्र वा न परमार्थतो रथा न रथयोगा न पन्थानो नानन्दा न मुदो न प्रमुदो न वेशान्ता न पुष्करिण्यो न स्रवन्त्यो भवन्त्यथाप्यसावेव रथान् रथयोगान् पथ आनन्दान्मुदः प्रमुदो वेशान्तान् पुष्करिणीः स्रवन्तीश्च सृजते शारीरमभिप्रहत्यासुप्त एव च स्वयं सुप्तानभिचाकशीत्युच्चावचमीयमानः कुरुते रूपाणि बहूनि। उतैव स्त्रीभिस्सह-मोदमानो जक्षदुतेवापि भयानि पश्यन् भवति।

स चायं परमार्थ एवेति केचित्प्रतिपन्नाः। अयमेषामाशयः—स्वप्नो हि नाम जीवस्यैव कश्चिदवस्थाविशेषः। स च जाग्रदिव तथाभूत एव। न हि जाग्रत्येव तिष्ठद्गच्छदवस्थानुभूतयोरन्यतरः

सत्योऽन्यतरस्त्वतथाभूत इति कश्चित्प्रत्येति। स्वप्नश्च नाम शयानस्य तादृश एव कश्चिदवस्थाविशेष इति स परं कथं मिथ्या प्रतीयताम्। न चास्ति जाग्रदनुभवात्स्वाप्नानुभूतेः कश्चिद्विशेषप्रतिलम्भः। अत एवाह भगवती श्रुतिः — 'अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्तः' इति, 'अथ रथान् रथयोगान् पथः सृजते स हि कर्ता' इति 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति च।

न चात्र समुचितदेशाद्यनुपपत्तिः। देशाद्यन्तरितद्रव्यादिग्रहण-दर्शनबलात् बहिर्गत्वैव देशान् देहाज्जीवः स्वप्नं द्रक्ष्यतीति कल्पनोपपत्तेः। न चेदं कल्पनामात्रं यतः श्रुतिरमुमप्यर्थमाह—'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा। स ईयतेऽमृतो यत्र कामम्' इति। न चानिष्क्रान्ते जन्तौ स्थितिगतिप्रत्ययादिभेदः सामञ्जस्यमश्नुवीत।

भविष्यतोः साध्वसाधुनोस्सूचकत्वादपि तथाभूत एव स्वप्न उपगन्तव्यः। अयमप्यर्थः श्रुत्या प्रतिपादितो यथा —

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने॥' इति

'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इति च। विस्तृत-श्चासौ स्वप्नाध्यायेषु तत्तत्त्ववोदिभिः इति नात्र वितन्यते।

अत एव चात्र विषये भगवद्रामानुजाचार्यैरपि बहु पराक्रान्तं शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादे प्रथमस्मिन्नेवाधिकरणे 'सन्ध्ये सृष्टिः पारमेश्वरी न जैवी'त्यादिना इति ।

तदपरे न क्षमन्ते । तेषां चायमाशयः—किं जाग्रदेव स्वप्नः किं वा जाग्रत्तुल्यः । न ह्यमूढः कश्चिज्जाग्रदेव इति स्वप्नं प्रतीयात् । देशकालनिमित्तादिवैधर्म्यात् । नामैव तावत्स्वतो भिन्नमनयोर्भेदं प्रसाधयति । भेदो हि विशेषः । प्रसाधितश्चायमर्थः शारीरकमीमांसायां श्रीमच्छङ्करभगवत्पादैः 'वैधर्म्याच्च न स्वप्नादिवत्' इत्यत्र । यथा—'न स्वप्नादिप्रत्ययवज्जाग्रत्प्रत्यया भवितुमर्हन्ति । कस्मात् । वैधर्म्यात् । किं पुनर्वैधर्म्यं? बाधाबाधाविति ब्रूमः । अपि च स्मृतिरेषा यत् स्वप्नदर्शनम् । उपलब्धिस्तु जागरितदर्शनम्' इत्यादि । प्रमाणजाप्रमाणजत्वादिवैधर्म्यान्तरमपि स्पष्टत्वादुदासितम् । श्रुतिरप्याह—'बाध्यन्ते चैते स्वप्नदृष्टाः प्रबोधे' इति । तत्रैवं सति न शक्यते वक्तुं स्वप्नो जाग्रदिति ।

शक्यते तु वक्तुं कथञ्चित्स्वप्नो जाग्रत्तुल्य इति । तौल्यं च सादृश्यम् । तच्च स्वप्नस्य जाग्रता सह तत्प्रभववासनाप्रभवत्वेन तत्तुल्यनिर्भासत्वमेव न तु तद्वत्सत्यत्वादिकम् । तदप्युक्तं भगवद्भाष्यकारैरेव यथा—'न तत्साम्यवचनं सत्यत्वाभिप्रायं स्वयंज्योतिष्ट्वविरोधात् । श्रुत्यैव

च स्वप्ने रथाद्यभावस्य दर्शितत्वात्। जागरितप्रभववासनानिर्मितत्वात्तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत्' इत्यादि।

न च जीवावस्थाविशेषत्वेनापि स्वप्नस्य तथात्मत्वं युक्तं वक्तुम्। तादृशस्यापि जाग्रदुद्भूतस्य शुक्तिरजतमरुमरीचिकादिविज्ञानस्यातथाभूतत्वस्यैवानुभवानुरोधेन बहुतरसम्प्रतिपन्नत्वात्।

किं चात्र विभावयत भगवत्पादीयं भाष्यवचनम् — यथा— 'न हि परमार्थवस्तुविषयाणि देशकालनिमित्तान्यबाधश्च स्वप्ने सम्भाव्यन्ते। तथा हि—न तावत्स्वप्ने रथादीनामुचितो देशस्सम्भवति। कालविसंवादोऽपि च स्वप्ने भवति। रजन्यां सुप्तो वासरं भारते वर्षे मन्यते। तथा मुहूर्तमात्रपरिवर्तिनि स्वप्ने कदाचिद्बहुवर्षपूगानतिवाहयति। एवं निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वचितानि विद्यन्ते। करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति। रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा। स्वप्न एव चैते सुलभबाधा भवन्ति। रथोऽयमिति हि कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्पद्यते। मनुष्योऽयमिति च निर्धारितः क्षणेन वृक्ष इति।

न च बहिर्देहात्स्वप्नदर्शनमिति युक्तम्। दर्शयति हि श्रुतिरेव देहे स्वप्नम्-'स यत्रैतत्स्वप्न्यया चरति' इत्युपक्रम्य 'स्वे शरीरे यथाकामं परिवर्तत' इति। न चास्ति तत्रोपपत्तिः। न हि जाग्रतोऽपि

जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं, विपर्येतुं च ततः सामर्थ्यं सम्भाव्यते किमुत सुप्तस्य। क्वचिच्च प्रत्यागमनवर्जितमेव स्वप्नं श्रावयति श्रुतिः 'कुरुष्वहमद्य शयानो निद्रयाभिप्लुतः स्वप्ने पञ्चालानभिगतश्चास्मिन् प्रतिबुद्धश्च' इति। देहाच्चेदपेयात् पञ्चालेष्वेव प्रतिबुध्येत। कुरुष्वेव तु प्रतिबुध्यते। येन चायं देहेन देशान्तरमश्नुवानो मन्यते तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति। यथाभूतानि चायं देशान्तराणि स्वप्ने पश्यति नैव तानि तथाभूतान्येव भवन्ति। असहाय एव च सुप्तो बहुभिः सहायैः स्वप्नानुपलभते। यैश्चायं तदा सङ्गत-स्तैस्ततो गृह्येत। न च गृह्यते। गृहीतश्चेत्त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः। न चैतदस्ति। अत एवोक्तं भगवद्गौडपादैरपि -

दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः। इति।

स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम्। इति च।

विद्यारण्यस्वामिनोऽप्याहुः —

नेत्रे जागरणं कण्ठे स्वप्नः सुप्तिर्हृदम्बुजे। इति।

तदेवं श्रुत्युपपत्तिविरोधात् बहिष्कुलायश्रुतिर्गौणी व्याख्यातव्या। बहिरिव कुलायादमृतश्चरित्वेति। यो हि वसन्नपि शरीरे न तेन प्रयोजनं करोति स बहिरिव शरीराद्भवतीति। स्थितिगत्यादिप्रत्ययो-प्येवं सति विप्रलम्भ एवेत्यकामेनाप्यभ्युपगन्तव्य एवेति नाग्रहेण किञ्चित् कृत्यम्।

अत्रेदमवधानीयम् — इयताप्यत्र पारमार्थिकस्तु नायं संध्याश्रयः सर्गो वियदादिसर्गवदित्येतावत्प्रतिपाद्यते । न हि वियदादि - सर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति । 'प्रतिपादितं हि 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम् । प्राक्तु ब्रह्मात्मत्वदर्शनाद्वियदादिप्रपञ्चो व्यवस्थितरूपो भवति । संध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत इति । अतो वैशेषिकमिदं संध्यस्य माया - मात्रत्वमुदितम् । अत एवेयमविशेषोक्तिर्गौडपादाचार्याणां – 'माया - मात्रमिदं द्वैतम् अद्वैतं परमार्थतः' इति । शृण्वन्तु चेमाः श्रीभगवद्गौडपादीया एव कारिकाः प्राक्प्रपञ्चितार्थप्रकाशिकाः यथा—

वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः ।
अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना ॥

अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति ।
प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥

अभावश्च रथादीनां श्रूयते न्यायपूर्वकम् ।
वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ॥

अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम् ।
यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥

स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिणः ।
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथैस्सदृशास्सन्तोऽवितथा इव लक्षिताः ॥
सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ इति

संध्यसृष्टेः पारमेश्वरत्वाभ्युपगमोऽपि नातीव हृदयङ्गमः। सृष्टिमात्रस्य भवतां मते पारमेश्वरत्वाविशेषात् संध्ये सृष्टिः पारमेश्वरीति वैशेष्योक्तेर्निष्फलत्वप्रसङ्गात् स्वाप्नसृष्टेर्वैचित्र्यान्न तत्र जीवव्यापारः जाग्रत्सृष्टेस्त्वतथारूपत्वात्तत्र युज्यते जीवव्यापार इति च नाञ्जसं वचनम्। सृष्टिमात्रस्यैवाचिन्त्यत्वस्य भगवत्पादैरेवाभिप्रेतत्वात् । तथा हि तेषां वचनं जन्माद्यधिकरणे — 'अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य' इत्यादि । श्रुतिविरुद्धश्चायं पक्षः । जन्माद्यधिकरणे जाग्रत्सृष्टिमात्रस्य पारमेश्वरत्वस्य व्यवस्थापितत्वात् । जगद्व्यापाराधिकरणे योगिजीवानामपि जगद्व्यापारवत्वस्य प्रतिषिद्धत्वाच्च ।

किञ्च स्वाप्नसृष्टेः पारमेश्वरत्वात् परमार्थत्वमिति च न ऋजुः पन्थाः । जीवस्यैव स्वप्नस्रष्टृत्वाभ्युपगमात् । 'स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इति हीदं वाक्यं स्पष्टमेव जीवस्य स्वप्न -

निर्मातृत्वं वदति। 'स हि कर्ता' इति च। अमुमेव चार्थं भगवान् सूत्रकारोऽप्याह -- 'आत्मनि चैवं विचित्राश्च हि' इति। तदेवं सति 'य एष सुप्तेषु जागर्ति' इत्यादिमन्त्रोऽपि जीवस्रष्टृत्वप्रतिपादक एवाभ्युपगन्तव्योऽविरोधाय।

ननु भोः पारमेश्वरत्वानभ्युपगमेऽपि स्वप्नस्य भवतैव जीवस्रष्टृत्वांगीकाराद् भवतु परमार्थता। तस्या एव यथाकथञ्चिदस्माभिः सिषाधयिषितत्वात् इति चेत्, नायं नैयायिकः पन्थाः। वैदिको ह्ययं मार्गः। न चायमस्मादृशानां सिषाधयिषामन्यद्वा किञ्चिदपेक्ष्य प्रसिध्यति। देशकालनिमित्ताद्यभावस्य बाधस्य च स्वप्नपरमार्थताबाधकस्य पूर्वं प्रपञ्चितस्य जागरूकत्वाज्जन्मशतेनापि न स्वप्नस्य परमार्थता शक्या प्रसाधयितुम्। कथमेवं तर्हि स्वप्नस्य जीवसृष्टत्वोक्तिः श्रुतेः सङ्गच्छताम्। संगच्छत एवेत्थं यथा लाङ्गलं गवादीनुद्वहतीति निमित्तमात्रत्वादेवमुच्यते न तु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति एवं निमित्तमात्रत्वात्सुप्तो जीवो रथान् सृजते स हि कर्तेति चोच्यते। न तु प्रत्यक्षमेव सुप्तो रथादीन् सृजति। निमित्तत्वं चास्य रथादिप्रतिभाननिमित्तमोदत्रासादिदर्शनात् तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वमेव।

किञ्च सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिरिति च न घटत एव। अशक्तेरश्रुतत्वाच्च। रथात्वे च नैवानिष्टं कश्चित् स्वप्ने

पश्येत्। न ह्यसंमुग्धः कश्चिदात्मनोऽनिष्टं सङ्कल्पयते। अतो मायामात्रमविद्यामात्रमेव स्वप्नो नैव परमार्थ इति कृतमभिनिवेशेन।

किञ्च स्वप्नानुभवस्यापि तथाभूतत्वे तत्प्रसङ्गे सर्वत्र 'उतेव स्त्रीभिस्सह मोदमानो जक्षदुतेवापि भयानि पश्यन्। घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविधया मन्यते। देव इव राजेव अप्रियवेत्तेव रोदितीव नाहमत्र भोग्यं पश्यामि' इत्यादिवाक्यजालं किमितीवघटितमेव पठ्यते। अतो मायामात्रमेव स्वप्नो न तथाभूत इत्येष एव राजमार्गः।

एवमपि किमर्थं केचित्तत्तथात्वसमर्थन एव पुनः प्रयतन्त इति चेत्त एवात्र महानुभावा भवता पर्यनुयोज्या न वयम्। अथ वा किं पर्यनुयोगेन? भवानेव पर्यालोचयतु परिहृत्य प्रौढं भावं स्वहृदयेनेत्यलमतिविस्तरेण।

ननु मायामात्रत्वात्तर्हि न कश्चित्स्वप्ने परमार्थगन्धोऽस्तीति तस्योक्तं भविष्यत्साध्वसाधुसूचकत्वं कथं नाम घटताम्। स्वप्नाध्यायविदो ह्याचक्षते — कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीनि चाधन्यानि मन्त्रदेवताप्रसादद्रव्यविशेषनिमित्ताश्च केचित्स्वप्नास्सत्यार्थगन्धिनो भवन्तीति।

सूचकस्य स्त्रीदर्शनादेर्वैतथ्योऽपि सूच्यमानस्य कर्मसमृद्ध्यादेः सत्यत्वाभ्युपगमात् स्वप्नस्योक्तं साध्वसाधुसूचकत्वं घटत एव।

अपि च कथं नु भो वितथादवितथस्य प्रतिपत्तिः सम्भाव्यताम्। न हि धूलिकल्पितधूमाद्वह्नेः, रज्जुसर्पदंशनान्मरणस्य मृगतृष्णिकाम्भसा पानावगाहनादेः,शुक्तिरजतात् क्रयविक्रयणादेर्वा भवति प्रसिद्धिरिति चासाम्प्रतिकः प्रश्नः। क एवमाह भवतो वितथादवितथं न भवतीति। भवत्येव हि शङ्काविषादिना वितथेन मरणमोहाद्यवितथम्। रेखानृताक्षरप्रतिपत्त्या च वितथयैवावितथाकाराद्यक्षरप्रतिपत्तिः। मृतो बन्धुरिति मृषावादमृषाभूत एव च शोकमोहमरणादिः। प्राप्तो बन्धुरिति मृषावादादेव चामृषाभूतहर्षप्राप्तिः। अनुस्मर चेदं रज्जुस्सर्पदर्शनान्मृषाभूतादेव सत्यभयकम्पादेर्जननम्। शुक्तिरजतविज्ञानान्मायिकादेवामायिकहर्षादेर्जननम्।

वस्तुतस्तु स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमेवानृतं तदवगतिस्तु सत्यमेव फलम्। प्रतिबुद्धस्याप्यबाध्यमानत्वात्। न हि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशनादिकार्यं मिथ्येति मन्यमानस्तदवगतिमपि मिथ्येत्यभिमन्यते व्यवहरति वा कश्चित्।

स्वप्नकार्यानृतत्ववादोऽप्ययं प्रबोधापेक्षयैव न स्वस्वरूपापेक्षया। यतः सुप्तस्य प्राकृतस्य पण्डितस्य वा जानस्य स्वप्ने उच्चावचान् भावान् पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक्प्रबोधाज्जाग्रतीव महास्वापस्य प्राक्तत्त्वसाक्षात्कारात्। प्रबोधापेक्षमेव चेदं

मायामात्रत्वं स्वाप्नसृष्टेः प्रसाधितं भगवता सूत्रकृता 'मायामात्रं तु' इति । तदेव च प्रपञ्चितं भगवता भाष्यकृतापीति बोध्यम् ।

अत एव च स्वप्नजागरयोरेकरूपतैव भगवद्गौडपादैरपि व्यवस्थापिता माण्डूक्यकारिकास्वागमप्रकरणे यथा —

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः ॥
स्वप्ननिद्रायुतवाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥
अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ इत्यादि ॥

तदेवं जाग्रत्प्रभववासनाप्रभवत्वात्स्वप्नस्य जाग्रद्भावनाभावितान्तरङ्गस्य प्रसजत्येव भावना स्वाभिमतविषया स्वप्नेऽपीति तदयोगानभ्युपगमाद्भवत्येव तत्र साक्षात्कृतिरपि स्वाभिमतवस्तुविषया । सूचितश्चायमर्थोऽन्यार्थप्रसाधनव्यग्रैर्विद्यारण्यस्वामिभिरपि —

'इत्थं जागरणे तत्त्वविदो ब्रह्मसुखं सदा ।
भाति तद्वासनाजन्ये स्वप्ने तद्भासते तथा ॥' इति ॥

प्रसाधितमेव च पुरस्तात्तत्प्रामाणिकत्वादिकमपीति नास्यम् वाग्मार्थानुबन्धिनः प्रबन्धस्य प्रामाणिकत्वाप्रामाणिकत्वोपादेयत्वानुपादेयत्वादिविचारः क्षोदक्षम इति न तत्र क्रियतेऽतीव मया प्रयासः ।

काव्यप्रभेदेषु चायं खण्डप्रभेदेऽन्तर्भवति। 'गद्यपद्योभयमयं चम्पूरित्यभिधीयते' इत्युक्तचम्पूलक्षणलक्षितत्वाच्चम्पूरिति चाभिधान-मात्रहति। विशिष्टं चास्याभिधानं भगवदनुधावनमिति।

## नामौऽचित्यम्

निरु पपदं च भगवत्पदं श्रीकृष्णस्यैवाभिधायकमिति प्रसाधितमेतदुपक्रम एवास्माभिः। स्वभक्तस्यास्य कवेः स्वस्मिन् भक्तिपरीक्षणार्थमिव स्वयमेवास्य पुरतः साक्षाद्भूय, संप्रार्थ्य च स्वयमेव तं स्वाभीष्टं भक्ष्यादिकं तत्प्रदानसमुद्यतेऽस्मिं तदगृहीत्वैव स्वयं पुरो धावन्तं श्रीकृष्णं भगवन्तं विविधैस्तन्महिमावेदकैः स्तवैः संस्तुवंस्तमेव चोपायैः रनेकैः संग्रहीतुं भक्तशिखामणिरयं कविरनुधावतीत्ययमर्थोऽत्र प्रबन्धे प्राधान्येनप्रतिपाद्यत इति प्रबन्धस्यास्य नाम कृतं भगवदनुधावनमिति। नामान्तरैरप्ययं प्रबन्धो निर्दिश्यते कविना तत्र तत्र यत्किञ्चिद्विशेषा - भिधित्सया यथा —

'श्रीबालगोपालविलासनाम्नीं — कृतिं'

कृष्णलीलात्मिका कृतिः' —

राधामाधवपृष्ठधावनकथा

हरिचरिते

श्रीराधिकानाथपश्चानुधावनाभिधान — कृतौ

राधामनोनाथपदानुधावनाभिधानके इत्यादि।

चत्वारश्चात्राश्वासा भवन्ति। एषु चायं

तत्र तावत् प्रथमे आश्वासे पीताम्बरलाभनाम्नि:—

## उपोद्घाते

सांप्रतिकश्रीजगद्गुरु श्रीचन्द्रशेखरेन्द्रसरस्वतीस्वरूपा - नुवर्णनतत्प्रणतिपूर्विका स्वकृतिश्रवणस्वीकरणाभ्यर्थना, उमामहेश्व- रानुध्यानम्, कविवंशस्थलनामनिर्देशपूर्वकं कृतिसमर्पणादिपूर्वपीठि- का, श्रीकृष्णतुष्ट्यै श्रीजगद्गुरुभ्यः स्वकृतिसमर्पणम्, स्वकृतिस्व - कुलस्वरूपनिरूपणपूर्वकं तद्ग्रहणप्रार्थनम्, कृतिपतिश्रीजगद्गुरुनमस्कृतिः, स्वत्वरूपानुकीर्तनपूर्वकमङ्गलाचरणप्रतिज्ञानम्, मङ्गलाचरणम्, सत्कवि- प्रणतिः कुकविप्रणतिः, भूसुराभिवन्दनम्, गुरुपरम्पराप्रणामः, देवता- गणप्रस्तुतिः, भागवतप्रणमनं च ।

## कृतौ

स्वावासवर्णनम्, प्रबन्धनिर्माणप्रयोजकस्वप्नकालादिकथनम्, स्वप्न एव श्रीकृष्णस्तवनम्, श्रीकृष्णसाक्षात्कृतिः, श्रीकृष्णानु - धावनम्, साक्षात्कृतश्रीकृष्णस्वरूपानुवर्णनम्, श्रीकृष्णकृतस्वाभीष्टभक्ष्या- द्यानयनाकांक्षणम्, भक्तस्य तदानोद्यमः, तदा श्रीकृष्णकृतधावनम्, सानुनयतर्जनसंस्तवनं भक्तकृततदनुधावनम्, पुनः पुनरनेकधा दशाव - तारस्वरूपमहिमाद्यनुवर्णनपूर्वकं स्वाहृतभक्ष्यादिस्वीकरणाभ्यर्थनम्, पुनः

श्रीकृष्णपलायनम्, अहेतुकश्रीकृष्णपलायनस्यानौचित्यकथनम्, स्वसंरक्ष - कत्वकथनम्, पुनः प्रधावतः कृष्णस्यानेकधा स्वरूपोल्लेखनम्, स्वस्वरूपनिश्चित्यै श्रुतीतिहासपुराणसूत्रगीतादिशरणीकरणं करणीय - मिति भक्तं प्रति श्रीभगवतो वचनम्, व्यासशुकनारदादीनामपि तत्राशक्तत्वकथनपूर्वं स्वस्वरूपतत्त्वकथनं स्वेनैव करणीयमिति सनिदर्शनं भगवन्तं प्रति भक्तवचनम्, अनुक्त्वैव पुनर्भगवतो धावनम्, भक्तानुधावनम्, भक्तभगवतोर्गन्तव्यदेशानुयोगप्रतियोगादिवर्णनम्, तथा धावनकारणानुयोगप्रतियोगादिवर्णनम्, पुनर्भगवतो धावनम्, स्वानुधावनाशक्तिनिर्वेदनिवेदनपूर्वं भक्तकृतं विस्तृतं श्रीकृष्णापराध - क्षमापनस्तवनम्, भक्तसंशोधनार्थमिव स्तवनमप्यनादृत्य पुनः प्रधावतः श्रीकृष्णस्य दिव्यमङ्गलविग्रहान्महार्घस्य कौशेयवाससः पीताम्बरस्य स्रंसनम् त्वरया तत्स्वीकृत्य विवृत्य पश्यति भक्ते ततो - ऽनेकप्रकारस्य लेखसञ्चयस्य विस्रंसनम्, तदावेदनपूर्वकं पुनस्तमनु- धावतो भक्तस्य पुनस्तत्स्तवनोद्यमः आद्याश्वासोपसंहरणं च ।

द्वितीये

पीताम्बरशक्तिवैभवप्रख्यापकनाम्नि श्रीजगद्गुरुं प्रति स्वकृतिस्थ- द्वितीयाश्वासश्रवणाभ्यर्थनम्, स्वसम्पादितभक्ष्यभोज्यादिधारणप्रकारवर्णन- पूर्वकं पुनः श्रीकृष्णस्तवनम्, सोल्लुण्ठनं सविस्तरं च नूतनया कयापि सरण्या भगवतः पीताम्बरवर्णनम्, तद्रहितस्य ततो धावनानौचित्यकथनम्, लुप्त-

महिमत्वशक्तिविहीनत्वादिकथनम्, स्वारोपितपीताम्बरचौर्यदोषाभावकथनम्, पुनस्ततो धावने पीताम्बराप्रतिदानकथनं, ततः पीताम्बरनामलोपश्च भगवतः स्यादिति व्याजतर्जनम्, ततः क्रुद्धस्येव तूष्णीं स्थितस्य भगवत स्तुत्या परिसान्त्वनम्, पीताम्बरलाभेन स्वलाभस्य तद्धानेन भगवतो न्यूनतायाश्चाविष्करणपूर्वकं भक्ष्यादिपरिग्रहे तत्प्रतिदानप्रतिज्ञानम्, ततो भक्ष्यादिस्वरूपवर्णनपूर्वकं तत्स्वीकरणप्रार्थनम्, तदप्ययनादृत्य भगवतः कदध्वना धावनम्, कदध्वनि तदनुधावनाशक्तस्य भक्तस्य तन्मार्गोपरोधकनूतननानावस्तुविशेषाविष्करणेन भगवतस्ततो निवर्तनोद्यमः तत्रापि वैमुख्यमावहति भगवति तद्दुश्चेष्टादीनां तत्पित्रोस्तद्भक्तेषु तथा ऋषिसमाजे गोलोके तथैव तद्बन्धुषु निखिलासु दैनन्दिनवारिकपाक्षिकमासिकादि पत्रिकासु विदेशेष्वप्याविष्करणकथनेन भक्तकृतं परितर्जनम्, ततः किञ्चिन्मन्दगतिना भगवता स्वकरग्रहणोद्यते स्वभक्ते स्वीयामूल्यकाञ्चीदामाबद्धहेमकिंकिणीकापहारित्वदोषारोपणम्, ततोऽतिभीतेन भक्तेन तत्परिजिहीर्षाव्याजेनैकां ऐन्द्रजालिकविद्यापरनामधेयां पीतांबरविद्यां प्रदर्शयता तत्समर्पणम्, पुनः पीताम्बरवैभवप्रकटीचिकीर्षया अपरां पीतांबरविद्यामादर्शयता भगवतोऽनेकविचित्रचित्रादिप्रदर्शनम्, पुनर्भक्ष्यस्वीकरणप्रार्थनम् एवमप्यस्वीकरणे स्वापरिमितमानुष्यकसाहाय्यबलेन बुद्धिशक्त्या च भगवतो बन्धनमवश्यंभावीति प्रतिज्ञानम्, द्वितीयाश्वासोपसंहरणं च ।

## तृतीये

पीताम्बरार्पणहृष्टश्रीमाधवलाभनाम्नि-श्रीजगद्गुरुस्तवनम्, युक्तेस्सकलार्थसाधकत्वनिदर्शनम्. स्वानुमताया भगवद्बन्धकशास्त्रयुक्तेस्तादृश्या एव लौकिकयुक्तेश्च प्रकारनिदर्शनम्, तत्तद्देशविशेषाणां तत्तद्देशविशेषनिवासिनां प्रभूणां पण्डितानां भक्तवराणां च नामनिर्देशपुरस्सरं श्रीकृष्णग्रहणसमर्थायाः स्वसहायसम्पत्तेरतिविस्तरेण कथनम्,सहायसम्पत्तिश्रवणाद्भीतिमिवाभिनयताभगवता भक्तसंमोहनार्थं स्वसहायानां गोपार्भकाणामाह्वानम, तेषां सङ्कल्पमात्रात्तत्रागमनम्, भक्तकृतगोपार्भकस्वरूपवर्णनम्, गोपार्भककृतसोल्लुठनश्रीकृष्णपरिसान्त्वनप्रकारकथनम्, ततो गोपार्भकवचनश्रवणाद्भीतस्यात एव परिकम्पितसर्वाङ्गस्य भक्तस्य भगवच्चरणशरणीचिकीर्षया भगवदन्तिकगमनपूर्वं तत्स्तवनम्,ततो भगवद्विश्वरूपदर्शनसभीतार्जुनकृतश्रीभगवद्गीतास्थश्रीकृष्णस्तवनवचनानुवादपूर्वकं पुनः श्रीकृष्णापराधक्षमापनस्तवनम्, ततो गोपार्भकपिधानेन स्वावशेषस्य भगवतो दर्शनम्, ततो हृष्टान्तरङ्गेन भक्तेन भगवत्प्रपत्तिपूर्वकं तन्निरुरुत्सया तद्गूढचरितानुबन्धिनः तद्दिव्यमङ्गलविग्रहच्युतपीताम्बरगलितलेखसञ्चयस्य स्वकक्षनिक्षेपसुरक्षितस्य स्वहस्तगतत्वावेदनम्, तत्स्वीकरणाय मन्दं मन्दं स्वान्तिकजुषे भगवतेऽतिवेलानन्दतुन्दिलहृदयेन भक्तेनैकैकशः पठितस्य लेखसञ्चयस्य क्रमशः समर्पणम्, तत्रोद्भवलेखस्यार्धपठने तद्रहस्यानुद्घाटनेच्छया भक्तहस्ताद्भगवता हठात्तदाकर्षणम्,तथाकरणे शि-

च्छलेखाप्रदानकथनम्, भक्तेन पुनर्निर्बन्धतस्तल्लेखलेखनप्रकारपठनम्, तत्र नानाप्रकारभगवत्प्रणयिजनानुप्रेषितोपायनप्रकारानुवाचनम्, ततः सर्वलेखार्पणपरितुष्टं भगवन्तं पदयोर्निपत्य ग्रहीतुकामे भक्ते पुनर्भगवतो लघु धावनम्, सनिर्बन्धं भक्तस्य पुनरनुधावनम्, ततः कोपेनेव परावृत्तस्य भगवतः स्वहृदयदयितां राधिकां विहायान्यान्, देवान् स्वमपि प्रस्तुतवतस्तव भक्ष्याणि न रोचते मह्यमिति कथनम्, भक्तेन च सुनिपुणं तथाकरणकारणोपन्यासः, पुनः श्रीकृष्णगमनम्, पुनर्भक्ताभ्यर्थनम्, न चेत्त्वमेवमपि प्रसीदसि इतः परमाशुतोषं पार्वतीपतिमाश्रयामीति भक्तोक्तिः, पुनर्लिकुचफलचतुष्टयं हस्तेकृत्यप्रदर्श्य तेषां तत्कान्ताभिः प्रेषितत्वोक्त्या तत्परिचरणाय तत्प्रियजनाह्लादनोक्त्या च भगवत्प्रलोभनम् पुनर्जिगमिषति भगवति शपथोक्तिश्रावणम्, ततोऽन्ततस्तिष्ठता भगवता भक्तपरिसान्त्वनम्, तदा च सप्रश्रयप्रेमगद्गदं भगवन्महिमानुकीर्तनपुरस्सरं भक्तकृतं भगवदालिङ्गनम्, दिव्यमङ्गलविग्रहस्य भगवतः स्वपीताम्बरेणालङ्करणम्, पुनः परिरम्भणम्, तन्निवर्तिताखिलपरिश्रमेण भक्तेन लीलाशुकवाग्भिः पुनरभिष्टवनम्, तत्करावलम्बनम्, तद्गण्डपरिचुम्बनम्, तच्छिरस्समाघ्राणम्, पुनस्ततस्तवनम्, भूयोभूयस्तत्प्रदक्षिणीकरणम्, पुनः पादग्रहणम्, आनन्दातिरेकान्मोहोपगमः, पुनर्लब्धस्मृतेर्भक्तस्य भगवतः पुरतः स्थितस्य भगवते स्वकरतलस्थितसमस्तभक्ष्यप्रकरसमर्पणोद्यमः, तृतीयाश्वासोपसंहरणं च ।

तुरीये

भगवत्कृपामृतप्राप्त्यभिधाने — श्रीजगद्गुरुस्तवन - नमनतुरीयाश्वासश्रवणप्रार्थनानि, श्रीकृष्णसर्वाङ्गपूजाविधानम्, भक्ष्य-संहतिभक्षणविलम्बभिया धूपाघ्रापणदीपदर्शनादीनां क्रमिकाणा - मप्यकरणं संग्रहेण करणं मनसा करणं वा सोल्लासमेकैकस्वरूपनिवेदन-पूर्वकं सुपाकनिपुणसम्पादितस्वाहृतभक्ष्यभोज्यचोष्यलेह्यपानीयादिप्रकर-स्वीकरणाभ्यर्थनम्, श्रुतैतद्वृत्तांतायाः ससंभ्रमं कुतोऽप्यकस्मात्तत्र सन्नि-हितायाः सपरिवारायाः स्वधर्मपत्न्याः स्वरूपस्थितिवर्णनम्, तथै-व शकटारोपितभगवत्समाराधनार्थकदलीपर्णफलादिसकलसम्भारसंभृतानां सानुयात्रिकाणां स्वमातुलद्वयस्वसम्बन्धिस्वभ्रातृपुत्रस्वभ्रातृजामात्रा - दीनां तत्रागमनवर्णनम्, तत्कृतभगवदुपस्थानप्रकारस्य विशेषतो वर्णनम्, श्रुतैतद्वृत्तान्तानां परिसरग्रामवासिनामाचण्डालमागोपालं च तत्र संघीभूतानां काकतालीयमहासुकृतलभ्यैतादृशसमागमसन्दर्शनपरिहृष्ट - स्वान्तरङ्गानां भगवन्तं प्रति संस्तवनम्,ततो भक्ततत्सम्बन्धिकृतस्वानुचर-गोपालबालभगवदभ्यवहारार्थसाधनसज्जीकरणपरिवेषणमन्त्रजपोपचारवचन व्यजनवीजनसुगन्धिचन्दनचर्चनतांबूलवितरणादीनां वर्णनम्, भक्तचेलांच-लपरिमृष्टमुखोदरपाणिपादस्य दृढपरिहितपीताम्बरस्य स्वकराभ्यां भक्तगलं दृढमालम्ब्य भक्तस्कन्धमेवाधिरूढस्य भगवतः स्वस्कन्धाधिष्ठितभगवच्चरणं भक्तं प्रत्यनेकपर्वतत्त्वार्थोपदेशवर्णनम्, भगवद्भागवतबन्धुवर्गाणामन्तर्धिः,

द्वितीयाद्वितीयस्य भक्तस्य परिशेषः, प्रथमं प्रमुष्टसंज्ञेन पश्चात्स्वपत्न्या चरितशिशिरोपचारलब्धसंज्ञेन च भक्तेन स्वप्रत्यभिज्ञागोचरीकृतं भगवन्तं प्रति पुनर्दर्शनदानयाचनविलापनादिकथनम्, पुनर्मूर्च्छोपगमनम्, पुनस्स्वपत्न्युचारात् संज्ञोपलब्धिः, भगवत्प्रेरितस्य महतो देवस्य भवानीपतेस्तदा तत्राविर्भवनम्, भक्तकृता भवभवान्योः संस्तुतिः, महादेवकृतभक्तपरिसान्त्वनपूर्वतत्त्वोपदेशवर्णनम्, भवभवान्योरन्तर्धानम्, अन्तर्हितं भगवन्तं भवानीपतिमनुधावतो भक्तस्य तस्मै स्वावस्थाविज्ञापकवचनकथनपूर्वकं सहर्षनर्तनम्, तदा च संभ्रान्तैः पार्श्वस्थैस्तत्प्रबोधनम्, तेभ्यः कविना स्वानुभूताखिलस्वप्नवृत्तानुवर्णनम्, तच्छ्रवणपरिहृष्टान्तरङ्गैः पार्श्वस्थैः कृतं श्रीकृष्णस्तवनम्, स्वानुभूतिस्वरूपनिर्धारणम्, श्रीकृष्णप्रीतिसंप्रार्थनम्, स्वकृतिप्रचारणार्थमाशंसनम्, सर्वार्थस्वस्त्ययनम्, स्वकृत्युद्देश्यस्य स्वयमेवाविष्करणम्, स्वकृतिस्वरूपकथनम्, पुनरपि स्वकृतिकरणोद्देश्यकथनम्, ततः श्रीजगद्गुरुप्रणतिस्वग्रन्थस्वीकरणाभ्यर्थनपूर्वं तुरीयाश्वासोपसंहरणंच ।

तदेतादृशातिविचित्रतिवृत्तचित्रितोऽयं प्रबन्धो निर्मत्सरमिममापादचूडमनुशीलयतां सहृदयानां कल्यभिसंहितयैव नीत्या श्रीकृष्णपरितोषणो द्राक्षासदृक्षवचोनिकरगुम्भितः श्रुतिस्मृतिन्यायेतिहासपुराणादिसिद्धसारार्थगर्भितोऽत एव सद्भक्तिविज्ञानविरक्तिबोधकः, श्रीगोविन्दसन्दर्शनसत्फलः साधुसङ्गतोऽसङ्गतार्थवर्जितोऽनवद्यहृद्यसत्पद्यगद्यविभूषित

श्रीकृष्णभक्तिरससम्भृतश्चेति निश्चप्रचं भायादेवेति नात्र तद्विस्तरापेक्षा। अथाप्युच्यते किञ्चिदत्रत्यः प्रलः पीताम्बरस्वरूपलेखसञ्चयानुवाचनप्रत्यर्पणभगवत्सर्वाङ्गपूजनपरिवेषणभोजनसेवनादीनां बहूनां वर्णनाप्रकारो बलादेवावर्जयेन्मानसं समेषां सहृदयानामावर्जितमेव च सुदृढं मे मानसमिति। अनितरसाधारणी सन्दर्भसमुचिता चात्र तत्र तत्र कथासंघटना दरीदृश्यते। भगवद्भक्तिरसपरिपोषणैकतानेऽप्यत्र प्रबन्धे शब्दार्थगुणालंकाररीतयः कविसमयसमादरणीयाः प्रतिपदं समादृता एव कविनेति नातोऽधिकमवशिष्यतेऽत्र वक्तव्यम्।

ननु भक्त्याख्यो रस एव नास्ति। आलङ्कारिकमूर्धन्यैस्तस्यासंप्रतिपत्तेः। तथा हि—तेषु हि केचिदष्टावेव रसाः शृङ्गारो हास्यः करुणो रौद्रो वीरो भयानको बीभत्सोऽद्भुतश्चेति संप्रतिपन्नाः। यद्यप्येवं दृश्ये, श्रव्ये तु शान्तेन सह नवैव ते रसा भवितुमर्हन्ति। अत एवोक्तं श्रीमम्मटभट्टैः — 'अष्टौ नाट्ये रसाः स्मृताः' इति। 'शान्तोऽपि नवमो रसः' इति च इत्यन्ये। अविशेषेणोभयत्र दृश्ये श्रव्येऽपि च नवापि रसा भवितुमर्हन्ति। अत एवोक्तं श्रीविद्यानाथेन—

'शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताश्च रसाः प्राच्यैरुदाहृताः॥' इति॥

तथाहि भरतमुनिनाप्युक्तं अविभज्यैव —

'शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताश्च काव्ये नव रसाः स्मृताः॥' इति॥

सङ्गीतरत्नाकरे चरमाध्यायेऽप्युक्तम् —

'अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्।

तदचारु यतः कश्चिन्न रसं स्वदते नटः॥' इत्यादि॥

भगवद्भक्तिरसायनेऽप्युक्तं 'नवरसमिलितं वा' इति। इति चापरे। तदेवं रसानामष्टत्वनवत्वयोरेव परं तैः कोलाहलः प्रवर्तितो न दशत्वे नापि भक्ते रसत्वे। प्रत्युत भक्ते रसत्वं कैश्चित् प्रतिषिद्धं विज्ञायते। यतः श्रीमधुसूदनसरस्वतीभिर्भक्तिरसायने स पक्षःक्वचिदनूदितो दृश्यते —

'रतिर्देवादिविषया व्यभिचारी तथोर्जितः।

भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः॥' इति॥

तदेवं सति कथमत्र भवतोच्यते 'भक्तिरसपरिपोषणैकतानेऽप्यत्र प्रबन्धे' इति चेत्, आयुष्मन् पठ वा समग्रं भक्तिरसायनं शृणुवेदं तदुक्तं किमपि वाक्यजातम्।

रसान्तरविभावादिसंकीर्णा भगवद्रतिः।

चित्ररूपवदन्याद्यसतां प्रतिपद्यते॥ 2 73

रसान्तरविभावादिराहित्ये तु स्वरूपभाक्।

दशमीमेति रसतां सनकादेरिवाधिकाम॥ इति॥ 2 74

न चास्याः शान्तेऽन्तर्भावात् कथमधिकत्वमिति शंक्यम्। शान्तस्य निर्वेदस्थायिकताया एवान्यत्र प्रसिद्धत्वात् युक्तत्वाच्च। अत एव चात्रास्या दशमत्वोक्त्या शुद्धरतिस्थायिकत्वादिकल्पना शान्तरसस्याप्रामाणिकीति विभावनीयम्।

किञ्चात्र स्मरणीयं भवता तत एवचात्रास्माभिः पूर्वोद्धृतं वचनजातम् —

रतिर्देवादिविषया व्यभिचारी तथोर्जितः ।
भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥ 2 75

देवान्तरेषु जीवत्वात्परानन्दाप्रकाशनात् ।
तद्योज्यः परमानन्दरूपे न परमात्मनि ॥ 2 76 इति ।

वस्तुतस्तु —

कान्तादिविषया वा ये रसाद्यास्तत्र नेदृशम् ।
रसत्वं पुष्यते पूर्णसुखास्पर्शित्वकारणात् ॥ 2 77

परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः ।
खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा ॥ 2 78

परमार्थतस्तु —

क्रोधशोकभयादीनां साक्षात्सुखविरोधिनाम् ।
रसत्वमभ्युपगतं यथानुभवमात्रतः ॥ 2 79

तथानुभवसिद्धोऽपि सहस्रगुणितो रसः ।
जडेनेव त्वया कस्मादकस्मादपलप्यते ॥ 2 80

तत्साधूक्तमेवैतत् भगवद्भक्तिरसेत्यादीत्यलमतिपल्लवितेन ।

काव्यरसः

एष एव च सपरिकरो रसः कविनात्र निबन्धे प्राधान्येनोप-

निबद्धः। तथा हि :— शुद्धसत्त्वद्रुतचित्तोत्पन्ना भगवद्विषयिणी सुपरिदृढा रतिरेव भक्तिरसस्थायी। तथा ह्युक्तं भक्तिरसायने —

'रजस्तमोविहीना या भगवद्विषया मतिः।
सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते ॥' इति 2 58

'स्नेहस्यैव विकारः प्रिययोरत्यन्तभावनादनिशम्।
विरहासहिष्णुतात्मा प्रीतिविशेषो रतिर्नाम ॥' इति च 2 59

सा चात्रौपक्रममान्तं च सामान्यतो विशिष्य च—

'तथापि। चेतो मदीयमतसीकुसुमावभासं
स्मेराननं स्मरति गोपवधूकिशोरम्।'

इत्यत्रोपनिबद्धा। इयं च चित्ततापकतया तद्द्रुतिकारणानां द्विप्रकार-काम-द्विप्रकारक्रोध-भय - दास्यसख्यतदुभयात्मकसेव्यसेवकभावपाल्य-पालकभावोभयलक्षणस्नेह-चतुर्विधार्ष - शोक त्रिप्रकारदया त्रिविधो त्साह-शमादीनां भेदादनेकधा भिद्यते। तदुक्तं भक्तिरसायने —

'चित्तद्रुतेः कारणानां भेदाद्भक्तिरनेकधा ॥' इति,
यावत्यो द्रुतयश्चित्ते भावास्तावन्त एव हि।
स्थायिनो रसतां यान्ति विभावादिसमाश्रयात् ॥' इति च।

प्रपञ्चितश्चायमर्थः सोत्सर्गापवादं तत्रैवेति स तत एव सहृदयैर्विभावनीयः। भावनार्थं त्विह संक्षेपतः केचिदुपस्थाप्यन्ते।

कामजे द्वे रती शोकः प्रीतिभीविस्मयास्तथा ।
उत्साहोऽपि च दाने यो भगवद्विषया अमी ॥ 2 31

व्यामिश्रभावरूपत्वं यान्त्येते क्षीरनीरवत् ।
विभावादिसमायोगे तथा भक्तिरसा अपि ॥ 2 32

शुद्धा च वत्सलरतिः प्रेयोरतिरिति त्रयी ।
भावान्तरामिश्रितत्वादमिश्रा रतिरुच्यते ॥ 2 34

तदेवं —

केचित्केवलसंकीर्णाः केचित्सङ्कीर्णमिश्रिताः ।
केचित्केवलमिश्राश्च शुद्धाश्च स्युश्चतुर्विधाः ॥ 2 37

तत्रापि —

विशुद्धो वत्सलः प्रेयानिति भक्तिरसास्त्रयः ।
रसान्तरामिश्रितास्ते भवन्ति परिपुष्कलाः ॥ 2 35

पुनश्चेयं सोपाधिनिरुपाधिरूपाभ्यां द्विप्रकारा दर्शिता तत्रैव यथा —

शुद्धा व्यामिश्रिता चेति पुनरेषा द्विधा भवेत् ।
तत्रानुपाधिः शुद्धा स्यात्सोपाधिर्मिश्रितोदिता ॥ 2 65

अनुपाधिः परानन्दमहिमैकनिबन्धना ।
भजनीयगुणानन्त्यादेकरूपैव सोच्यते ॥ 2 66

विभावादिसमायोगे शुद्धभक्तिरसो भवेत् ।
कामसम्बन्धभयतः सोपाधिस्त्रिविधा भवेत् ॥ 2 67

शृङ्गारमिश्रिता भक्तिः कामजा भक्तिरिष्यते ।
सम्बन्धजा रतिर्ज्ञेया पूर्वोक्तरसयोर्द्वयोः ॥ 2 68

एको वत्सलभक्त्याख्यः प्रेयआख्यस्तथापरः ।
भयजा रतिरध्यास्ते रसं प्रीतिभयानकम् ॥ इति । 2 69

तदेवं शुद्धया रत्या शान्तः, कामजया शृङ्गारः, सम्बन्धजया सख्य-वात्सल्ये, भयजया दास्यं चेति पञ्चाप्यत्र मुख्या भक्तिरसाः संगृहीता इति सुधीभिर्विवेचनीयम् , प्रायेण चैष्वेकैक एव सुलभसम्पादोऽथवा दुःसम्पादः साधकेषु मध्यमन्दगतीनामिति, एषु क्वचिदेव यत्रान्तर्यामिप्रेरणादिना चित्तमुन्मुखीभवेत्तत्रैवाभ्यासं कुर्यात्साधनेच्छुरिति शास्त्र-रहस्यम् । तदप्युक्तं भक्तिरसायने —

एकद्व्यादिरसव्यक्तिभेदाद्रसभिदा भवेत् ।
तस्मात् क्वचित्तदभ्यासं कुर्यादितिचतुष्टये ॥ इति । 2 71

न चात्र 'कामसम्बन्धभयतः' इति 'भयजा रतिरध्यास्ते' इति च भयशब्दसमावेशाद्भेतव्यमृजुमतिभिः । न ह्यत्र व्यालादेरिव भयं विवक्षितं किन्तु दासैर्गौरवमर्यादासंरक्षणसम्भ्रमादितो यथा प्रभुतो भेतव्यं तथा भगवत इति तादृशमेव हि निविवेशयिषितम् । तच्च दास्यस्थायिन्याः प्रीतेरनुगुणमेव । तत एव च तत्र तद्व्याख्यावसरे ग्रन्थकृतैव 'रसं प्रीतिभयानकम्' इति प्रीतिशब्दोऽपि संयोजित इति बोध्यम् ।

इदमप्यवधेयमत्र यदेकैकस्मिन्नाश्रये एकैकै व नियमेन रति-रुत्पद्यमानोत्पद्येत न समुदितेति नेयं राजाज्ञा । किं तु प्राग्भवसञ्चित-पुण्यपुञ्जपरीपाकलब्धजन्मविशेषे वल्लवीजनतुल्यगुणेऽत्युत्तमे भागवतधुरीणे क्वचिदेकाश्रय एव स्वस्वकारणसामग्रीसमवधानविशेषादेकदैव कदाचित् काम सम्बन्धद्वय-भयजानां रतीनां चतुष्टयमाविरियादेवेति । तत्र च पानकरसन्यायेनानुभूयमानश्चित्ररसोऽपि कश्चित् चित्ररस इव चित्रवर्ण इव च लौकिको दुरपह्नव एव । एतच्चोक्तं भक्तिरसायने —

एकदा यद्यपि व्यक्तमिदं रतिचतुष्टयम् ।
तदा तु पानकरसन्यायेन परमो रसः ॥ इति ॥ 2 70

तमिममेव चित्राभिधानं रसप्रकारं 'विभावानुभावव्यभिचारिसंयोगाद्रसनि-ष्पत्तिः' इति भगवद्भरतमुन्युक्तिनयमनुसृत्य तत्र तत्र तत्तत्सन्दर्भसमुचिता-नुद्दीपनविभावान् तुलसीचन्दनवनमालापीताम्बरादीन्, अनुभावन्नेत्रवि-क्रियास्मितगीतगात्रविक्षेपादीन्, सात्विकान् स्तम्भप्रलयरोमाञ्चादीन्, व्यभिचारिणश्च निर्वेदालस्यादीन् रत्या सुसंयोज्य सुनिबन्धने स्वनिब-न्धे कविरयं सुनिपुणमुपनिबबन्धेति प्रबन्धमेनं सुनिपुणं परितो निरूपयतां सुनिपुणमतीना मतिरोहितमेवेति सर्वं चतुरस्रम् ।

## काव्यसमीक्षा

अन्ते चेदमवश्यावेद्यं किञ्चिदावेद्यते भावुकानां पुरतो यदियं काव्यकुमारिका निशान्तस्वप्नदृष्टव्रजवधूविटरतिभीतिसमाकुलया प्रसूत-

मात्रैव कविमाला भिषजं कंचनाथवा धात्रीं कांचनमामभिमन्यमानया मन्मित्रं महादेवनामानं कञ्चन द्वारीकृत्य ममान्तिकमुपनीता 'कीदृगिय' मिति परिपृष्टेन यावन्मया लोचनगोचरीकृता प्रथमतस्तावत् स्वयं सुगु- णापि स्वलङ्कारापि सुशोभनरसभावाभरितापीयं ममानभिव्यक्तवर्णगुणा- लङ्काररसभावेयमपरिपुष्टांगेव प्रतिभाता। यतस्सा शुद्धान्ध्रवर्णपटीसुघ- टितशरीरैव तदासीत्। तदाहमेवं कविमातरमवोचम् 'भवति, भावत्केयं भवदीयवर्णपटीसुघटितसर्वावयवा कथंकारं मया द्रष्टव्या। अदृष्टाचेयमी दृगिति कथं वा निर्धारणीया। यदि चेयं मयैवावश्यद्रष्टव्येत्याग्रहोऽसु- परिहरो भवत्याः तदा अपसार्यतामियं प्रथमतो भावत्कवर्णपटावृतिरिति। सद्यएव चेयं कुमारिका यदैव तदनुमत्यैव विघटितपूर्ववसना सुघटितसंस्कृत- नागरवर्णात्मवसना च सञ्जाता तदाहमशकमापादचूडमिमामवलोकितुं परिशीलितुं च। अवलोक्य परिशील्यचेमामापाततस्तन्मान्तरमहं पुनरब्रवम् 'दृष्टेयं सर्वाङ्गसुन्दरी। वर्धतामिति। सा मां पुनः प्राह — यथा — ननु भोः न केवलमाहमाशीर्लिप्सयाभवतो भवन्तम- लोपगता, किन्त्वेतस्यास्तत्त्वबुभुत्सया किमियं मया भक्तिपरवशीकृतस्वा- न्तरङ्गया भूतावेशेनेव परिकम्पितसर्वाङ्गया च प्रसूता सुपरिपूर्णस्वावयवा किं वा सुगुणपरिपूर्णा किंस्वित् दोषविधुरा किं चापि रसपुष्टेति। तद्यथावकाशमिमां भवान् सुपरिशोध्य, शोधितायाश्चास्या यदीयामुपा- देयगुणादिका स्यात् तदा तथेयमिति योग्यताचीटिकापि कापि भवता प्रदेयेति। तथेति तथैवेयं यथावकाशं यथामति च मया संशोध्य

समीकृत्य च तत्र ततोपलब्धं अबलीयांसं न्यूनीभावं, दत्तेयं तत्प्रार्थनानु रोधिनी योग्यताचीटिका । अस्याश्च सदसद्भावे भावत्कमेव भावुकाः प्रमाणं सुहृदयमिति ।

## कार्तज्ञ्यनिवेदनम्

अपि चास्य प्रबन्धस्य परिशोधनानुक्रमणिकादिनिर्माणादिविषये मम कृतसाह्यानां श्रीयुत व्याकरणविद्याप्रवीण - श्रीमहादेवशास्त्रिणां - व्याकरणन्यायवेदान्तादिशिरोमणिबिरुदभाजां श्रीयुतरामानुजचार्याणां- च वितीर्यन्ते बहुशो धन्यवादा इति अत्र च प्रबन्धे एतत्प्रबन्धोद्दि- ष्टविशेषाणां नामानुक्रमणिका तत्तद्देशनिवासिनामनेकेषां महतां नामा- नुक्रमणिका चेत्यनुक्रमणिकाद्वयं शुद्धाशुद्धिपत्रं श्रीवेङ्कटेशशतकं चेत्य- धिकतयापि केचन विषयास्संयोजिताः सहृदयहृदयमोदयेति चावेद्य सुस्थं सर्वमित्युपरम्यते ।

इत्थं

विद्वज्जनविधेयः

साहित्यविशारद-साहित्यशिरोमणि-

वेदांतशिरोमण्यादिबिरुदाङ्कितः

भगवत्पादीयभाष्यादिग्रन्थाध्यापकः

मद्रपुरराजकीयप्राच्यपुस्तकभाण्डाकारसंस्कृतपण्डितः

वरहूर् कल्याणसुन्दरशास्त्री

मद्रपुरी
24 7 55

श्रीः

క. రాధానాథ పదాంబుజ, మాధ్వీకస్యంది మధుకరా! కృష్ణకవీ!
గోధుక్ప్రీతి మోహనశిఖ, గాధామంజులమునీగ కల్ల మధుధునియే.

**मल्लवल्लशरभेश्वरशर्मणाप्रेषिता ।**

**महाकवि श्रीकाकवाककृष्णशास्त्रिकृतस्य**

**भगवदानुधावनाख्यस्यग्रन्थस्यप्रशंसापत्रिका**

निर्वाणायास्तु जगतां निखिलागमसंस्तुतम् ।
प्रावृषेण्यपयोवाहश्यामलं कोमलं महः ॥

कलिग्रीष्माहसन्तापात् धन्वायितमिदं जगत् ।
हरिभक्तप्रपा कास्ते क्व वा मधुमुचो गिरः ॥

वाचामयनुमाधुर्यं भक्तिर्नैसर्गिकी हरौ ।
संमेलनं तदुभयोः जननान्तरपुण्यतः ।

प्राचां लीलाशुकादीनां रसोद्गारिगिरां पथि ।
स्तुताकृतिरसाम्भोधिः भासते हरिरत्र नः ॥

माधुर्यैकरसाम्भोधि शिखिपिञ्छाञ्चितं महः ।
स्मारं स्मारमिमां दृष्ट्वा कृतिमुच्छ्वसितं मनः ॥

इति

सुजनविधेयः

मल्लपल्लि शरभेश्वरशर्मा

CHANDRIKA PRESS, MADRAS-21.

॥ श्रीः ॥

ब्रह्मश्री आत्मविद्याभूषण श्री विद्यालङ्कार

# वे. जगदीश्वरशास्त्रिणां

## ॥ प्रस्तावना ॥

आपादादाचनाभेरतिरभसरमासुन्दरीकामकेळी-
हारिद्रद्रावसङ्गद्विगुणितसुषमाडम्बरं लम्बमानम् ।
कालाम्भोवाहमालाविगलितचपलाभ्रान्तिमन्दायि यत्तत्
पीतं दद्यात्प्रमोदं कटितटघटितं चैलमाब्जेक्षणं नः ॥

भो भो विविधकाव्यनाटकालङ्कारादिसाहित्य सारसर्वस्ववेदिनः ! सहृदयाः ! मनीषिणः ! कर्णे कुरुत मदीयां विज्ञापनासूक्तिमञ्जरीं । विदितमेवेदं तत्र भवतां—यदुत संस्कृतभाषाऽपारपारावारतितीर्षूणां व्युत्पत्सूनां जनानां सरससत्काव्यसंपरिशीलनतरणिसमारोहणं विना नोपायान्तरमस्तीति । एतदर्थमेव महाकविभिः श्रीकालिदासभवभूत्यदिभिरद्यनापि सहृदयहृदयचमत्कारजनकानि व्युत्पत्तिसंपादकानि रसभरितगद्यपद्यमयानि काव्यादीनि विरचितान्युपलभ्यन्ते । एतादृशकाव्यलक्षणादिविज्ञानायैव मम्मटादिदिभिः काव्यप्रकाशादिग्रन्थाः व्यरच्यन्त ।

इह खलु जगति समस्तमेव लौकिकं वस्तुजातमेकरूपमेकान्तसुखकरं नावतिष्ठते । पश्यामः किल प्रतिदिनं; प्रातः परिमलगुरूणि

नयनानन्ददायीनि यान्यासन् कुसुमानि, सायङ्काले पुनस्तानि सम्प्राप्त-भूतलानि संसरणीयगन्धीनि विगतशोभानि च नानन्दयन्ति नो नयनं। एवं पुरा ये खलु भारतभूखण्डमिदं मण्डयामासुः धीराश्शूराः श्रीमन्तो धीमन्तो गुणोदारा उत्तमाः पुरुषाः, न खलु तेषां बहूनां कथाऽपि कर्णपदवीमधिरोहति ।

विचित्रेऽस्मिन्संसारे सुखदुःखमयेष्वतिक्रामत्स्वहोरात्रेषु प्रति-क्षणपरिणामिषु परश्शतेषु पदार्थेषु नास्त्येव वा तादृशं वस्तु किमपि यत् खलु सकृदुत्पन्नं अजरामरमेकरूपमपरिणामि ।

अस्तीत्येव ब्रूमः । स्फुरद्वाग्ब्रह्मणां सुखमयशब्दप्रपञ्चकल्पनाकुश-लानां महाकवीनां नित्यशुद्धस्वभावं अनन्याधीनमविकारि आत्मज्योती-रूपं सूक्तिलक्षणं वस्तु ।

नादाभिधं तदेव ज्योतिर्जगदिदमवभासयत्यात्मना । अन्यथा अन्धमिदमखिलं भवेत् । महाकवयः खलु स्वप्नवत् दृष्टनष्टस्वभावे पाञ्चभौतिके पिण्डे न शरीरधियं निबध्नन्ति । अपितु चिरकालस्था-यिना सूक्तिज्योतिश्शरीरेण शरीरिणो भवन्ति ।

नचेदमविदितं भावुकानां—यत्खलु महाकव्युपज्ञं अन्यादृशं सूक्तिसर्वस्वरहस्य मनन्यवृत्ति मनसि पुनःपुनर्भावयतो विगलितवेद्या न्तरं स्वानुभवैकवेद्यं रसमनुभवतश्च रसिकश्रेष्ठस्य श्रीकालिदासादयो महाकवयश्चक्षुर्विषयतामुपयान्तीव भान्तीति । अपरमपीदमाश्चर्यं कर्म सुकविसूक्तिसुधारसस्य—यत्किल भावनाप्रकर्षवशात् अतिक्रान्त-

दर्शनमपि कथाभागं, कथानायकं च पुरस्तादस्माकमवस्थापयतीति। तदुक्तमभियुक्तैः।

'चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम्'। इति ॥

एतादृशेषु सत्काव्यस्रष्टृषु एतद्भगवदनुधावननामक चम्पूप्रबन्धप्रणेता श्रीकृष्णकविरप्यन्यतमएवेति नः प्रतिभाति।

## काव्यस्वरूपम्।

सहृदयहृदयाह्लादजनकत्वमेव काव्यस्य संक्षिप्तं लक्षणमभिप्रयन्त्यालङ्कारिकाः। तच्च पद्यरूपं, गद्यरूपं गद्यपद्यमिश्रं वाऽस्तु, सर्वमपि तत्पूर्वोक्तलक्षणएवान्तर्भवितुमर्हति। अपिच काव्यं दृश्य श्रव्य भेदात् द्विधाभिन्नं। तत्र दृश्यं नाटकादि। श्रव्यं काव्यादि। चम्पूशब्दाभिधो भेदोऽप्येको भवति। तस्य लक्षणं च।

'गद्यपद्यात्मकं काव्यं चंपूरित्यभिधीयते'। इति विख्यातमेव। एतल्लक्षणसम्पन्नत्वादेवेयमपि प्रकृता कृतिः चंपूशब्देन प्रथते। एनामेवाधिकृत्य किञ्चिद्वक्तुमभिलषामः।

संस्कृतसाहित्ये पद्यप्रबन्धानां भूयसा प्रचारदर्शनेऽपि, गद्यप्रबन्धानां चंपूप्रबन्धानां चांगुलीपरिगणनीयतयाऽतिसंकुचितः प्रचार इति नाविदितमिदं विदुषां। कोवाऽत्र हेतुरित्यस्य प्रश्नस्य बहवो बहुधा समाधानं ब्रुवते। तत्रैकं समाधानपक्षं निरूप्य, सोपपत्ति विमृश्य च, पश्चात् प्रस्तुतं प्रक्रमिष्यामहे।

तत्र केचिदाधुनिका आहुः—संस्कृतभाषा तावल्लौकिकव्यवहारेषु नोपयुज्यत इति प्रसिद्धं अतएवास्य संस्कृतपदेन व्यपदेशस्संगच्छते।

| | अ॰ | श्लो॰ |
|---|---|---|
| न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।<br>न चैव न भविष्यामः सर्वे वयमतः परम् ॥ | 2 | 12 |
| वेदाहं समतीतानि वर्तमानानि चार्जुन ।<br>भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ | 7 | 26 |
| अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।<br>अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ | 2 | 28 |
| बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।<br>तान्यहं वेद सर्वाणि न त्वं वेत्थ जनाधिप ॥ | 4 | 5 |
| अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।<br>प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥ | 4 | 6 |
| यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।<br>ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ | 4 | 37 |
| ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।<br>यद् ज्ञात्वा नेह भूयोऽन्यत् ज्ञातव्यमवशिष्यते ॥ | 7 | 2 |
| दैवी ह्येषा गुणमयी मम माया दुरत्यया ।<br>मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ | 7 | 14 |
| शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।<br>एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ | 8 | 26 |

इत्यादिश्लोकार्थं परामृशतामतिरोहितमेव ।

अत एव मधुसूदनसरस्वतीश्रीचरणाः श्रुतिशिरोवचननिर्वचन धुरन्धरा अपि भगवति श्रीकृष्णस्वरूप एव स्वस्यासाधारणं प्रीतिविशेषमा वेदयन्ति— 'कृष्णात्परं किमपि तत्त्वमहं न जाने' इत्यादिना ।

ध्यानावस्थिततद्गतेनमनसायन्निर्गुणंनिष्कळम्
ज्योतिःकिञ्चननिष्क्रियं निरुपमंपश्यन्तिपश्यन्तुते ।
अस्माकन्तु तदेवलोचनचमत्काराय भूयाच्चिरम्
कळिन्दीपुळिनेषुयत्किमपितन्नलं महोधावति ॥

भगवद्भक्तिरसायनेऽप्याहुः —

नवरसमिलितं वा केवलं वा पुमर्थं
परममिह मुकुन्दे भक्तियोगं वदन्ति ।
निरुपमसुखसंविद्रूपमस्पृष्टदुःखं
तमहमखिलतुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि ॥ इति ॥

न केवलमेत एवान्येऽपि हि संख्यातिगाः संख्यावन्तः श्रीजय-देवप्रभृतयः श्रीकृष्णभक्तिपरवशीकृतस्वान्तास्तन्नामरूपानन्तकल्याण - गुणपूगकीर्तनानुस्मरणदर्शनचिन्तापरायणाः स्वस्वानुभूतार्थाविष्करण - चणानि प्रत्नानि प्रबन्धरत्नानि गीतगोविन्दमुखानि निरमासत शृण्वन्तु श्रीजयदेवकविवरप्रणीतमिदं पद्यरत्नम् । यथा —

"यदि हरिस्मरणे सरसं मनो
यदि विलासकलासु कुतूहलम् ।
मधुरकोमलकान्तपदावळीं
श्रृणुत भो जयदेवसरस्वतीम् ॥ स॰ १, श्लो॰ ३ ॥"

किमिदं स्वौद्धत्यप्रकाशनमात्रफलं यतः स्वभणितं स्वयमेव प्रस्तौति श्रीजयदेवोऽपि । यद्यपीत्थं मन्दभागानां स्यान्मतिः तथापि सेत्थं सुधीभिः सुपरिपक्वमतिभिः पराकर्तव्या — यदाहाचार्यदण्डी स्वलं - कृतिनिबन्धे काव्यादर्शे 'स्वक्रियाविष्क्रिया दोषो नात्र भूतार्थशंसिनः' इति । भूतार्थवचनमेवेदं श्रीजयदेवस्येतीह विषये शृणुतेदमैतिह्यं श्री - मच्चन्द्रदत्तकृतभक्तमालाप्रस्तुतं यथा —

एकदा ह्येको नरपतिर्जयदेवकृतं गीतगोविन्दमुपश्रुत्यातिहृष्ट- स्वान्तरङ्गोऽप्यसूयाविष्टचेतास्तत्काव्यं स्वनिकट एवान्तर्धाप्य स्वयमेव च तादृशं नूत्नं किञ्चिन्निर्माय काव्यं यशोलिप्सया तदेव तदाप्रभृति सर्वैः पठनीयं पाठनीयं गातव्यमधिगाप्यं चेति सर्वान् स्वनिदेशवर्तिनो विदुषोऽन्यांश्चादिदेश, विपक्षे दण्डमप्यतिक्रूरम् ।

अथैकदा स नृपतिः श्रीपतेः पुरुषोत्तमस्य दर्शनमभिकांक्षंस्त - न्मन्दिरमुपागतस्तत्र श्रीजयदेवं स्वकृतमेव गीतगोविन्दमुपगायन्तमर्चयन्तं नृत्यन्तं च दृष्ट्वाह — अहो! किमिति भवान् भवदीयमेव काव्यं स्वीकरोति न मदीयमिति । तं ह्येवं प्रतिजगाद श्रीजयदेवः । ननु भो राजन्! अङ्गीकृतमेव मया भवदीयं गीतगोविन्दम् । परं तु भगवान् गोविन्दः श्रीपतिः पुरुषोत्तमो न तत्स्वीकरोति नापि तेन परि- तुष्यति तथा यथा मदीयं स्वीकरोति मदीयेन वा परितुष्यतीति । तत्परीक्षणकृतक्षणस्स भूपालः सामात्यपरिवारो द्वयमपि तत्काव्यं पुरु - षोत्तमस्य भगवतः श्रीकृष्णस्य पुरत एव संस्थाप्य, अयि भोः स्वामिन्! यदनयोर्भवतोऽभीष्टतरं तदुपर्यन्यच्चाधस्तात् स्वयमेव भवान् स्थापयतु

सर्वेऽपिवयं यामो बहिर्गृहादित्युक्त्वा अनुष्ठाय च तथा तदनु कवाट-मुद्घाट्य सपरिवारः सजयदेवश्च स यावदभ्यन्तरं प्रविष्टस्तावदध्यक्षी-चकार स्वीयमधस्तनं जयदेवकृतं चोपरितनं काव्यम् ।

ततः शोकाकुलमनास्स नरदेवोऽन्नं पानीयं च परित्यज्य तत्रैव देवागारे रात्रौ तस्थिवान् सुषुप्तश्च यावत्तावदेव देवेन भगवता श्रीकृष्णेनैवं स्वप्ने प्राबोधि अयि नृपाल! मा वृथात्वं शुचो यतः श्रीजयदेवकृतमेव काव्यं गीतगोविन्दं प्रीणयति मामतिवेलं नान्यत् परमिदमपि शृणु तुष्य च त्वं यद्भवदीयमपि प्रीतकरमेव मम काव्यं गीतगोविन्दम् । यथैव स्वीकृतं जयदेवेन भावकं काव्यं तथा तदीयमपि त्वया स्वीकार्यमेव । न चालं स्वीकरणमात्रेण, परितः प्रख्यापनीयमपि तद्यतोऽदो मेऽतिप्रेमास्पदमिति ।

तदनु च प्रतिबुद्धस्स नरपालोऽतिवेलमानन्दमनुभूय प्रणम्य परमात्मानं, क्षमापय्य स्वापराधं, प्रपद्य श्रीजयदेवं, प्रख्याप्य च तत्कृतं गीतगोविन्दं, परिपठ्य च स्वयं कृतार्थो बभूवेति ।

किमत्र कारणम्? भक्तिप्रकर्ष एव । का नाम भक्तिः? भक्तिर्हि नाम सा या भगवद्धर्माद्द्रुतस्य मनसः सर्वेशे भगवति मुकुन्दे धारावाहिनी वृत्तिः नृणां निःश्रेयससाधनभूता च । अस्याः श्रेयस्साधनत्वमुक्तं यथा —

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ इति ॥

स्वरूपादिकं चोक्तं सप्रपञ्चंभगवद्भक्तिरसायने यथा —

द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता ।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते ॥ अ.1श्लो. 3

व्यञ्जको वा यथा लोके व्यङ्ग्यस्याकारतामियात् ।
सर्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते ॥ ,, 1,,22

चित्तद्रव्यं हि जतुवत्स्वभावात्कठिनात्मकम् ।
तापकैर्विषयैर्योगे द्रवत्वं प्रतिपद्यते ॥ ,, 1,, 4

कठिना शिथिला वा धीर्न गृह्णाति न वास्यते ।
उपेक्षज्ञानमित्याहुस्तद्बुधाः प्रस्तरादिषु । ,, 1,,29

शिथिलीभावमात्रं तु मनो गच्छत्यतापकैः ।
न तत्र वस्तु विशति वासनात्वेन किञ्चन ॥ ,, 1,, 7

काठिन्यं विषये कुर्याद् द्रवत्वं भगवत्पदे ।
उपायैः शास्त्रनिर्दिष्टैरनुक्षणमतो बुधः ॥ ,, 1,,30

कामक्रोधभयस्नेहहर्षशोकदयादयः ।
तापकाश्चित्तजतुनस्तच्छान्तौ कठिनं (तु तत्) भवेत् ॥,, 1,, 5

गृह्णाति विषयाकारं मनो विषययोगतः ।
इति वेदान्तिभिस्सांख्यैरपि सम्यङ्निरूपितम् ॥ ,, 1,,20

मूषासिक्तं यथा ताम्रं तन्निभं जायते तथा ।
घटादि व्याप्नुवच्चित्तं तन्निभं जायते(ध्रुवम्)द्रुतम् ॥ ,, 1,,22

द्रुते चित्ते विनिक्षिप्तः स्वाकारो यस्तु वस्तुना ।
संस्कारवासनाभावभावनाशब्दभागसौ ॥ ,, 1,, 6

द्रवतायां प्रविष्टं सत् यत्काठिन्यदशां गतम् ।
चेतः पुनर्द्रुतौ सत्यामपि तन्नैव मुञ्चति ॥ अ. 1 श्लो 8

बाह्यपिण्डस्य नाशेऽपि तिष्ठत्येव मनोमयः ।
अतः स्थायीति विद्वद्भिरयमेव निरूपितः ॥ ,, 1 ,, 26

स्थायिभावगिरातोऽसौ वस्त्वाकारोऽभिधीयते ।
व्यक्तश्च रसतामेति परानन्दतया पुनः ॥ ,, 1 ,, 9

भगवान्परमानन्दस्वरूपः स्वयमेव हि ।
मनोगतस्तदाकारो(र) रसतामेति पुष्कलम् ॥ ,, 1 ,, 10

अथेयं भक्तिभूमिका —

प्रथमं महतां सेवा तद्दयापात्रता ततः ।
श्रद्धाथ तेषां धर्मेषु ततो हरिगुणश्रुतिः ॥ ,, 1 ,, 32

ततो भक्त्यंकुरोत्पत्तिः स्वरूपाधिगतिस्ततः ।
प्रेमवृद्धिः परानन्दे तस्याथ स्फुरणं ततः ॥ ,, 1 ,, 33

भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता ।
प्रेम्णोऽथ परमा काष्ठेत्युदिता भक्तिभूमिका ॥ ,, 1 ,, 34

उल्लास II

चतुर्विधा त्रिविधा चेयं चक्तिः । यथा –

राजसी तामसी शुद्धसात्त्विकी मिश्रिता च सा ।
ईर्ष्याजद्वेषजाद्या स्याद्भयजद्वेषजा परा ॥ 41

हर्षजा शुद्धसत्त्वोत्था कामशोकादिजेतरा ।
सत्त्वजत्वे तु सर्वासां गुणान्तरकृता भिदा ॥ 42

भक्तिश्चतुर्विधाप्येषा भगवद्विषया स्थिरा ।
दृष्टादृष्टोभयैकैकफला भक्तिस्त्रिधा भवेत् ॥ 44

राजसी तामसी भक्तिरदृष्टफलमात्रभाक् ।
दृष्टादृष्टोभयफला मिश्रिता भक्तिरिष्यते ॥ 45

शुद्धसत्त्वोद्भवाप्येवं साधकेष्वस्मदादिषु ।
दृष्टमात्रफला सा तु सिद्धेषु सनकादिषु ॥ 46

वर्तमानतनुप्राप्यं फलं दृष्टमुदाहृतम् ।
भाविदेहोपभोग्यं यत्तददृष्टमुदीरितम् ॥ 50

कुतः —

रजस्तमोऽभिभूतस्य दृष्टांशः प्रतिबध्यते ।
शीतवातातुरस्येव नादृष्टांशस्तु हीयते ॥ 48

रजस्तमःप्रचण्डत्वे तुल्यवृत्तिरसमा ।
तीव्रवायुविनिर्क्षिप्तदीपज्वालेव भासते ॥ 51

रजःप्रबलसत्त्वांशादीर्ष्यादिद्वेषमिश्रिता ।
मनोवृत्तिः परानन्दे चैद्यस्य न सुखायते ॥ 53

तमःप्रबलसत्त्वांशाद्भयजाड्योपमिश्रिता ।
मनोवृत्तिः परानन्दे कंसस्य न सुखायते ॥ 54

तयोर्भावविशरीरे तु प्रतिबन्धक्षये सति ।
सैव चित्तद्रुतिर्भक्तिरसतां प्रतिपद्यते ॥ 55

अधुनापि भजन्तो ये द्वैपात्पाशुपतादयः ।
तेषामप्येवमेव स्यादथवानेन तुल्यता ॥ 56

रजस्तमोविहीना तु भगवद्विषया मतिः ।
सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते ॥ 58

दृष्टादृष्टफला भक्तिः सुखव्यक्तेर्विधेरपि ।
निदाघदूनदेहस्य गङ्गास्नानक्रिया यथा ॥ 47

रजस्तमस्समुच्छेदतारतम्येन गम्यते ।
तुल्येऽपि साधनाभ्यासे तारतम्यं रतेरपि ॥ 60

तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते ।
स्नात्वा भुक्तवतां भूयो गङ्गायां क्रीडतां यथा ॥ 49

द्रुतौ सत्यां भवेद्भक्तिरद्रुतौ तु न किञ्चन ।
चित्तद्रुतेरभावेन वेनस्तु कतमाऽपि न ॥ 57

रतिर्देवादिविषया व्यभिचारी तथोर्जित ।
भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥ 75

देवान्तरेषु जीवत्वात्परानन्दाप्रकाशनात् ।
तद्योज्यं परमानन्दरूपे न परमात्मनि ॥ 76

क्रोधशोकभयादीनां साक्षात्सुखविरोधिनाम् ।
रसत्वमभ्युपगतं तथानुभवमात्रतः ॥ 79

तथानुभवसिद्धोऽयं सहस्रगुणितो रसः ।
जडेनेव त्वया कस्मादकस्मादपलप्यते ॥ 80

## उल्लास III

ननु कोऽयं रसो नाम किंनिष्ठो वा भवेदसौ ।
अस्य प्रत्यायकः को वा प्रतीतिरपि कीदृशी ॥ 1

विभावैरनुभावैश्च व्यभिचारिभिरप्युत ।
स्थायी भावस्सुखत्वेन व्यज्यमानो रसः स्मृतः ॥ 2

सुखस्यात्मस्वरूपत्वात्तदाधारो न विद्यते ।
तद्व्यञ्जिकाया वृत्तेस्तु सामाजिकमनः स्मृतम् ॥ 3

गुणालंकाररीतीनां भावानां च निवेदकः ।
तस्य प्रत्यायकः शब्दो वृत्त्या व्यञ्जनरूपया ॥ 20

वृत्तिः कार्यापरोक्षास्य शब्दस्य सुखगर्भिणी ।
दशमस्त्वमसीत्यादिवाक्योत्थमतिवृत्तिवत् ॥ 21

नित्यं सुखमभिव्यक्तं 'रसो वै स' इति श्रुतेः ।
प्रतीतिः स्वप्रकाशस्य निर्विकल्पसुखात्मिका ॥ 22

बोध्यनिष्ठा यथास्वं ते सुखदुःखादिहेतवः ।
बोद्धृनिष्ठास्तु सर्वेऽपि सुखमात्रैकहेतवः ॥ 8

ज्ञातस्वपरसम्बन्धादन्ये साधारणात्मना ।
अलौकिकं बोधयन्ति भावं भावास्त्रयोऽप्यमी ॥ इति ॥ 11

अत्रेदमवधानीयम् — नेयं भक्तिर्ब्रह्मविद्यैव । स्वरूपसाधनफला-धिकारिवैलक्षण्यात् ।

1. द्रुतिपूर्विका भगवदाकाराकारिता सविकल्पकवृत्तिरूपा भक्तिः ।
   अद्रुतिपूर्विकाऽद्वितीयात्ममात्रगोचरा निर्विकल्पकवृत्तिरूपा ब्रह्म-विद्या ।

2. भगवद्गुणगरिमग्रन्थनरूपग्रन्थश्रवणादि भक्तिसाधनम् ।
   तत्त्वमस्यादिमहावाक्यश्रवणादि ब्रह्मविद्यासाधनम् ।

3. भगवद्विषयकप्रेमप्रकर्षो भक्तिफलम् ।
   सर्वानर्थमूलाज्ञाननिवृत्तिर्ब्रह्मविद्याफलम् ॥

4. प्राणिमात्रस्य भक्तावधिकारः ।
   साधनचतुष्टयसम्पन्नस्यैव ब्रह्मविद्यायामधिकारः । इति ।

तदेतादृशभगवद्भक्तिपरवशीकृतस्वान्तरङ्गः कश्चित्कविवरो भज-नीयसमाननामा अनवरतकृतश्रीकृष्णभावनस्तत्प्रकर्षातिशयलब्धश्रीकृष्ण-स्वप्नसाक्षात्कारः स्वामी स्वानुभूतिमनुस्मरन्निबबन्ध श्रीबालगोपालानु-धावनाद्यपरनामधेयां श्रीभगवदनुधाननाम्नीं कामपि कृतिम् ।

सुगृहीतनामधेयस्यास्य कवेरभिजनदेशकालस्वरूपाद्यवगमविषये नास्माभिरतितरां यत्न आस्थेयो यतः स्वयमेव कविनात्र स सर्वोऽपि विषयः स्फुटतरमेवोपनिबद्धः । यथा —

श्रीकृष्णाभिधानोऽयं कविवरः पञ्चद्राविडान्तर्विभागभूतान्ध्र-भूसुरवेगिनाडुवंशप्रभव आत्रेयगोत्रः श्रीगङ्गाधरश्रौतिनां प्रपौत्रः सुब्रह्मण्यश्रौतिनां पौत्रः श्रीवेङ्कटकृष्णश्रौतिसुब्बलक्ष्म्यम्बयोः पुत्रः सौजन्य - सौशील्यादिगुणगणभूषिताया जानकीनाम्न्याः सीमन्तिन्याः प्रियभर्ता वेमूरिगेहाभिधश्रीनरसिंहशास्त्रिशूलमेनिश्रीगोडाकृष्णशास्त्रिकालिदास - श्रीवेङ्कटसुब्बाशास्त्रिप्रमुखानेकगुरुलब्धसद्विद्यः श्रीमदुमारमणकरुणा - समासादितानवद्यहृद्यमृदुपद्यकविताभूषणः श्रीनन्दनन्दनपदारविन्दभजनानन्दैकतुन्दिलहृदयः वरिवस्यापरितोषितसाधुबृन्दः श्रीकाञ्चीकामकोटियतिराडास्थानविद्वन्मण्डलीकिङ्करः श्रीकाञ्चीमण्डलमण्डनायमानाष्टशताग्रहारान्यतमकाकवाकाग्रहाराभिजनोऽपि श्रीकाञ्च्या उत्तरभागे (36 miles मैल्) कालहस्त्याख्यक्षेत्रस्य दक्षिणभागे ( 5 miles मैल्) चेन्नपुर्या वायव्यभागे (36 miles) तिरुपतिक्षेत्रस्य प्राच्यभागे (32 miles मैल्) चेन्नपुर्यास्तिरुपतिक्षेत्रगमनार्थमहारथ्यामध्ये आरणी-नद्यास्तीरे च विराजमाने कालकूटाशनक्षेत्रमिति वल्मीकेश्वरमिति च स्कन्दपुराणप्रथिते शैवसमयाचार्यचतुष्टयान्यतमश्रीसुन्दरमूर्त्याख्य शिव-भक्ताग्रेसरप्रस्तुते सुरटिपल्लयाख्यसुक्षेत्र एवानवरतकृताधिवासः स्वकृत-तत्रत्यशिवालयोद्धारःपरमोपशान्त्याक्रियमाणकालयापनः श्रीशङ्करराम-नुजकृष्णचैतन्यादिमतानुशीलनप्रमुदितहृदयः "शैवा वयं न खलु तत्र विचारणीयं पञ्चाक्षरीजपपरा नितरां तथापि। चेतो मदीयमतसी कुसुमावभासं स्मेराननं स्मरति गोपवधूकिशोरत्" इत्युक्तयेन अनवरत-

शिवाराधनतत्परोऽपि पञ्चाक्षरीजापनुशीलनबद्धश्रद्धोऽपि प्राक्सञ्चितपुण्य-पुञ्जपरीपाकप्ररूढदृढभावनाभावितभगवत्स्वरूपः पञ्चपञ्चाशदधिकपञ्च-साहस्रपरिमिते कलिवर्षे जये चैत्रे शुक्ले नावमिके तिथौ निशान्तदृष्ट-स्वप्नसञ्जातहर्षोत्पुलकाङ्गयष्टिः पुनः प्रबुद्धः स्वाप्नस्वानुभवावेदकमिमं प्रबन्धं स्वप्रत्यभिज्ञाबलोपनीतं निबबन्ध भक्तजनमनोल्लासाय केवलं न पूर्वोत्तरतन्त्र सिद्धान्तसिद्धार्थोपमर्दाय। यदाह स्वयमेवासौ ग्रन्थान्ते—

तर्कव्याकृतिपूर्वतन्त्रविदुषां नाप्यत्र वेदान्तिनां
योगध्यानविदां च कर्मठततेस्तोषाय वा यत्यते।
ये तु श्रीहरिनामकीर्तनरताः श्रद्धालवः साधवः
तानुल्लासयितुं कृतां कृतिमिमां पश्यन्तु निर्मत्सराः इति॥

अन्यथा हि कथमत्रैव निबन्धे पूर्वोत्तरतन्त्रसिद्धान्तसिद्धान-र्थान् पौनः पुन्येन उपनिबध्नीयात् कविरित्यन्यदेतत्।

अत्र यत् किञ्चिदिदं प्रासङ्गिकं प्रस्तूयते। कः स्वप्नः। स किं तथाभूतोऽथवा— तथाभूत तत्रः कथं भावनाप्रसङ्गः। तदयोगे वा कथं साक्षात् कृतिः। भवन्ती वा कथं प्रामाणिकी इति।

स्वप्नो हि नाम सः यत्र यथार्कस्य मरीचयोऽस्तं गच्छतः सर्वा-स्तेजोमण्डल एकीभवन्त्येवं सर्वाणीन्द्रियाणि परे देवे मनस्येकीभवन्ति

न चैव शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायतेऽथ च महिमानं कञ्चनानुभवति ।

यत्स्थानो वासावात्मान्तःप्रज्ञ एव सन् प्रविविक्तमेव भुङ्क्ते विषयजातमुच्यते च तैजस इति ।

यत्र चासौ स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेतान्प्राणान् गृहीत्वा स्वे शरीरे यथकामं परिवर्तते । (बृह-2-1-18)

यत्र वैषोऽस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा ज्योतिषा प्रस्विपिति ।

यत्र वा न परमार्थतो रथा न रथयोगा न पन्थानो नानन्दा न मुदो न प्रमुदो न वेशान्ता न पुष्करिण्यो न स्रवन्त्यो भवन्त्यथाप्यसावेव रथान् रथयोगान् पथ आनन्दान्मुदः प्रमुदो वेशान्तान् पुष्करिणीः स्रवन्तीश्च सृजते शारीरमभिप्रहत्यासुप्त एव च स्वयं सुप्तानभिचाकशीत्युच्चावचमीयमानः कुरुते रूपाणि बहूनि । उतैव स्त्रीभिस्सहमोदमानो जक्षदुतेवापि भयानि पश्यन् भवति ।

स चायं परमार्थ एवेति केचित्प्रतिपन्नाः । अयमेषामाशयः—स्वप्नो हि नाम जीवस्यैव कश्चिदवस्थाविशेषः । स च जाग्रदिव तथाभूत एव । न हि जाग्रत्येव तिष्ठद्गच्छदवस्थानुभूतयोरन्यतरः

सत्योऽन्यतरस्त्वतथाभूत इति कश्चित्प्रत्येति। स्वप्नश्च नाम शयानस्य तादृश एव कश्चिदवस्थाविशेष इति स परं कथं मिथ्या प्रतीयताम्। न चास्ति जाग्रदनुभवात्स्वाप्नानुभूतेः कश्चिद्विशेषप्रतिलम्भः। अत एवाह भगवती श्रुतिः — 'अथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्तः' इति, 'अथ रथान् रथयोगान् पथः सृजते स हि कर्ता' इति 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति च।

न चात्र समुचितदेशाद्यनुपपत्तिः। देशाद्यन्तरितद्रव्यादिग्रहण-दर्शनबलात् बहिर्गत्वैव देशान् देहाज्जीवः स्वप्नं द्रक्ष्यतीति कल्पनोपपत्तेः। न चेदं कल्पनामात्रं यतः श्रुतिरमुमप्यर्थमाह —'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा। स ईयतेऽमृतो यत्र कामम्' इति। न चानिष्क्रान्ते जन्तौ स्थितिगतिप्रत्ययादिभेदः सामञ्जस्यमश्नुवीत।

भविष्यतोः साध्वसाधुनोस्सूचकत्वादपि तथाभूत एव स्वप्न उपगन्तव्यः। अयमप्यर्थः श्रुत्या प्रतिपादितो यथा —

'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति।
समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने॥' इति

'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इति च। विस्तृत-श्चासौ स्वप्नाध्यायेषु तत्तत्त्ववोदिभिः इति नात्र वितन्यते।

अत एव चात्र विषये भगवद्रामानुजाचार्यैरपि बहु पराक्रान्तं शारीरकमीमांसाभाष्ये तृतीयस्याध्यायस्य प्रथमे पादे प्रथमस्मिन्नेवाधिकरणे 'सन्ध्ये सृष्टिः पारमेश्वरी न जैवी'त्यादिना इति।

तदपरे न क्षमन्ते। तेषां चायमाशयः—किं जाग्रदेव स्वप्नः किं वा जाग्रत्तुल्यः। न ह्यमूढः कश्चिज्जाग्रदेव इति स्वप्नं प्रतीयात्। देशकालनिमित्तादिवैधर्म्यात्। नामैव तावत्स्वतो भिन्नमनयोर्भेदं प्रसाधयति। भेदो हि विशेषः। प्रसाधितश्चायमर्थः शारीरकमीमांसायां श्रीमच्छङ्करभगवत्पादैः 'वैधर्म्याच्च न स्वप्नादिवत्' इत्यत्र। यथा— 'न स्वप्नादिप्रत्ययवज्जाग्रत्प्रत्यया भवितुमर्हन्ति। कस्मात्। वैधर्म्यात्। किं पुनर्वैधर्म्यं? बाधाबाधाविति ब्रूमः। अपि च स्मृतिरेषा यत् स्वप्नदर्शनम्। उपलब्धिस्तु जागरितदर्शनम्' इत्यादि। प्रमाणजाप्रमाणजत्वादिवैधर्म्यान्तरमपि स्पष्टत्वादुदासितम्। श्रुतिरप्याह— 'बाध्यन्ते चैते स्वप्नदृष्टाः प्रबोधे' इति। तत्रैवं सति न शक्यते वक्तुं स्वप्नो जाग्रदिति।

शक्यते तु वक्तुं कथञ्चित्स्वप्नो जाग्रत्तुल्य इति। तौल्यं च सादृश्यम्। तच्च स्वप्नस्य जाग्रता सह तत्प्रभववासनाप्रभवत्वेन तत्तुल्यनिर्भासत्वमेव न तु तद्वत्सत्यत्वादिकम्। तदप्युक्तं भगवद्भाष्यकारैरेव यथा—'न तत्साम्यवचनं सत्यत्वाभिप्रायं स्वयंज्योतिष्ट्वविरोधात्। श्रुत्यैव

च स्वप्ने रथाद्यभावस्य दर्शितत्वात्। जागरितप्रभववासनानिर्मितत्वात्तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत्' इत्यादि।

न च जीवावस्थाविशेषत्वेनापि स्वप्नस्य तथात्मत्वं युक्तं वक्तुम्। तादृशस्यापि जाग्रदुद्भूतस्य शुक्तिरजतमरुमरीचिकादिविज्ञानस्यातथाभूतत्वस्यैवानुभवानुरोधेन बहुतरसम्प्रतिपन्नत्वात्।

किं चात्र विभावयत भगवत्पादीयं भाष्यवचनम् — यथा— 'न हि परमार्थवस्तुविषयाणि देशकालनिमित्तान्यबाधश्च स्वप्ने सम्भाव्यन्ते। तथा हि— न तावत्स्वप्ने रथादीनामुचितो देशस्सम्भवति। कालविसंवादोऽपि च स्वप्ने भवति। रजन्यां सुप्तो वासरं भारते वर्षे मन्यते। तथा मुहूर्तमात्रपरिवर्तिनि स्वप्ने कदाचिद्बहुवर्षपूगानतिवाहयति। एवं निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वोचितानि विद्यन्ते। करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति। रथादिनिर्वर्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा। स्वप्न एव चैते सुलभबाधा भवन्ति। रथोऽयमिति हि कदाचित्स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्पद्यते। मनुष्योऽयमिति च निर्धारितः क्षणेन वृक्ष इति।

न च बहिर्देहात्स्वप्नदर्शनमिति युक्तम्। दर्शयति हि श्रुतिरेव देहे स्वप्नम्-'स यत्रैतत्स्वप्न्यया चरति' इत्युपक्रम्य 'स्वे शरीरे यथाकामं परिवर्तत' इति। न चास्ति तत्रोपपत्तिः। न हि जाग्रतोऽपि

जन्तोः क्षणमात्रेण योजनशतान्तरितं देशं पर्येतुं, विपर्येतुं च ततः सामर्थ्यं सम्भाव्यते किमुत सुप्तस्य। क्वचिच्च प्रत्यागमनवर्जितमेव स्वप्नं श्रावयति श्रुतिः 'कुरुष्वहमद्य शयानो निद्रयाभिप्लुतः स्वप्ने पञ्चालानभिगतश्चास्मिन् प्रतिबुद्धश्च' इति। देहाच्चेदपेयात् पञ्चालेष्वेव प्रतिबुध्येत। कुरुष्वेव तु प्रतिबुध्यते। येन चायं देहेन देशान्तरमश्नुवानो मन्यतेतमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति। यथाभूतानि चायं देशान्तराणि स्वप्ने पश्यति नैव तानि तथाभूतान्येव भवन्ति। असहाय एव च सुप्तो बहुभिः सहायैः स्वप्नानुपलभते। यैश्चायं तदा सङ्गतस्तैस्ततो गृह्येत। न च गृह्यते। गृहीतश्चेत्त्वामद्य तत्रोपलब्धवन्तो वयमिति ब्रूयुः। न चैतदस्ति। अत एवोक्तं भगवद्गौडपादैरपि –

दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः। इति।

स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम्। इति च।

विद्यारण्यस्वामिनोऽप्याहुः —

नेत्रे जागरणं कण्ठे स्वप्नः सुप्तिर्हृदम्बुजे। इति।

तदेवं श्रुत्युपपत्तिविरोधात् बहिष्कुलायश्रुतिर्गौणी व्याख्यातव्या। बहिरिव कुलायादमृतश्चरित्वेति। यो हि वसन्नपि शरीरे न तेन प्रयोजनं करोति स बहिरिव शरीराद्भवतीति। स्थितिगत्यादिप्रत्ययोप्येवं सति विप्रलम्भ एवेत्यकमेनाप्यभ्युपगन्तव्य एवेति नाग्रहेण किञ्चित् कृत्यम्।

अत्रेदमवधानीयम् — इयताप्यत्र पारमार्थिकस्तु नायं संध्याश्रयः सर्गो वियदादिसर्गवदित्येतावत्प्रतिपाद्यते । न हि वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति । 'प्रतिपादितं हि 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यत्र समस्तस्य प्रपञ्चस्य मायामात्रत्वम् । प्राक्तु ब्रह्मात्मत्वदर्शनाद्वियदादिप्रपञ्चो व्यवस्थितरूपो भवति । संध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत इति । अतो वैशेषिकमिदं संध्यस्य मायामात्रत्वमुदितम् । अत एवेयमविशेषोक्तिर्गौडपादाचार्याणां – 'मायामात्रमिदं द्वैतम् अद्वैतं परमार्थतः' इति । शृण्वन्तु चेमाः श्रीभगवद्गौडपादीया एव कारिकाः प्राक्प्रपञ्चितार्थप्रकाशिकाः यथा—

वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः ।
अन्तःस्थानात्तु भावानां संवृतत्वेन हेतुना ॥

अदीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति ।
प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥

अभावश्च रथादीनां श्रूयते न्यायपूर्वकम् ।
वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ॥

अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम् ।
यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते ॥

स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिणः ।
भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।
वितथैस्सदृशास्सन्तोऽवितथा इव लक्षिताः ॥
सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ इति

संध्यसृष्टेः पारमेश्वरत्वाभ्युपगमोऽपि नातीव हृदयङ्गमः। सृष्टिमात्रस्य भवतां मते पारमेश्वरत्वाविशेषात् संध्ये सृष्टिः पारमेश्वरीति वैशेष्योक्तेर्निष्फलत्वप्रसङ्गात् स्वाप्नसृष्टेर्वैचित्र्यान्न तत्र जीवव्यापारः जाग्रत्सृष्टेस्त्वतथारूपत्वात्तत्र युज्यते जीवव्यापार इति च नाञ्जसं वचनम्। सृष्टिमात्रस्यैवाचिन्त्यत्वस्य भगवत्पादैरेवाभिप्रेतत्वात् । तथा हि तेषां वचनं जन्माद्यधिकरणे — 'अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य' इत्यादि । श्रुतिविरुद्धश्चायं पक्षः । जन्माद्यधिकरणे जाग्रत्सृष्टिमात्रस्य पारमेश्वरत्वस्य व्यवस्थापितत्वात् । जगद्व्यपाराधिकरणे योगिजीवानामपि जगद्व्यापारवत्त्वस्य प्रतिषिद्धत्वाच्च ।

किञ्च स्वाप्नसृष्टेः पारमेश्वरत्वात् परमार्थत्वमिति च न ऋजुः पन्थाः । जीवस्यैव स्वप्नस्रष्टृत्वाभ्युपगमात् । 'स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इति हीदं वाक्यं स्पष्टमेव जीवस्य स्वप्न -

निर्मातृत्वं वदति। 'स हि कर्ता' इति च। अमुमेव चार्थं भगवान् सूत्रकारोऽप्याह — 'आत्मनि चैवं विचित्राश्च हि' इति। तदेवं सति 'य एष सुप्तेषु जागर्ति' इत्यादिमन्त्रोऽपि जीवस्रष्टृत्वप्रतिपादक एवाभ्युपगन्तव्योऽविरोधाय।

ननु भोः पारमेश्वरत्वानभ्युपगमेऽपि स्वप्नस्य भवतैव जीवस्रष्टृत्वाङ्गीकाराद् भवतु परमार्थता। तस्या एव यथाकथञ्चिदस्माभिः सिषाधयिषितत्वात् इति चेत्, नायं नैयायिकः पन्थाः। वैदिको ह्ययं मार्गः। न चायमस्मादृशानां सिषाधयिषामन्यद्वा किञ्चिदपेक्ष्य प्रसिध्यति। देशकालनिमित्ताद्यभावस्य बाधस्य च स्वप्नपरमार्थताबाधकस्य पूर्वं प्रपञ्चितस्य जागरूकत्वाज्जन्मशतेनापि न स्वप्नस्य परमार्थता शक्या प्रसाधयितुम्। कथमेवं तर्हि स्वप्नस्य जीवसृष्टत्वोक्तिः श्रुतेः सङ्गच्छताम्। संगच्छत एवेत्थं यथा लाङ्गलं गवादीनुद्वहतीति निमित्तमात्रत्वादेवमुच्यते न तु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति एवं निमित्तमात्रत्वात्सुप्तो जीवो रथान् सृजते स हि कर्तेति चोच्यते। न तु प्रत्यक्षमेव सुप्तो रथादीन् सृजति। निमित्तत्वं चास्य रथादिप्रतिभाननिमित्तमोदत्रासादिदर्शनात् तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वमेव।

किञ्च सांकल्पिकी जीवस्य स्वप्ने रथादिसृष्टिरिति च न घटत एव। अशक्तेरश्रुतत्वाच्च। रथात्वे च नैवानिष्टं कश्चित् स्वप्ने

पश्येत्। न ह्यसंमुग्धः कश्चिदात्मनोऽनिष्टं सङ्कल्पयते। अतो मायामात्रमविद्यामात्रमेव स्वप्नो नैव परमार्थ इति कृतमभिनिवेशेन।

किञ्च स्वप्नानुभवस्यापि तथाभूतत्वे तत्प्रसङ्गे सर्वत्र 'उतेव स्त्रीभिस्सह मोदमानो जक्षदुतेवापि भयानि पश्यन्। घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यते। देव इव राजेव अप्रियवेत्तेव रोदितीव नाहमत्र भोग्यं पश्यामि' इत्यादिवाक्यजालं किमितीवघटितमेव पठ्यते। अतो मायामात्रमेव स्वप्नो न तथाभूत इत्येष एव राजमार्गः।

एवमपि किमर्थं केचित्तत्तथात्वसमर्थन एव पुनः प्रयतन्त इति चेत्त एवात्र महानुभावा भवता पर्यनुयोज्या न वयम्। अथ वा किं पर्यनुयोगेन? भवानेव पर्यालोचयतु परिहृत्य प्रौढं भावं स्वहृदयेनेत्यलमतिविस्तरेण।

ननु मायामात्रत्वात्तर्हि न कश्चित्स्वप्ने परमार्थगन्धोऽस्तीति तस्योक्तं भविष्यत्साध्वसाधुसूचकत्वं कथं नाम घटताम्। स्वप्नाध्यायविदो ह्याचक्षते — कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीनि चाधन्यानि मन्त्रदेवताप्रसादद्रव्यविशेषनिमित्ताश्च केचित्स्वप्नास्सत्यार्थगन्धिनो भवन्तीति।

सूचकस्य स्त्रीदर्शनादेर्वैतथ्योऽपि सूच्यमानस्य कर्मसमृद्ध्यादेः सत्यत्वाभ्युपगमात् स्वप्नस्योक्तं साध्वसाधुसूचकत्वं घटत एव।

अपि च कथं नु भो वितथादवितथस्य प्रतिपत्तिः सम्भाव्यताम्। न हि धूलिकल्पितधूमाद्वह्नेः, रज्जुसर्पदंशनान्मरणस्य मृगतृष्णिकाम्भसा पानावगाहनादेः,शुक्तिरजतात् क्रयविक्रयणादेर्वा भवति प्रसिद्धिरिति चासाम्प्रतिकः प्रश्नः। क एवमाह भवतो वितथादवितथं न भवतीति। भवत्येव हि शङ्काविषादिना वितथेन मरणमोहाद्यवितथम्। रेखानृताक्षरप्रतिपत्त्या च वितथयैवावितथाकाराद्यक्षरप्रतिपत्तिः। मृतो बन्धुरिति मृषावादमृषाभूत एव च शोकमोहमरणादिः। प्राप्तो बन्धुरिति मृषावादादेव चामृषाभूतहर्षप्राप्तिः। अनुस्मर चेदं रज्जुस्सर्पदर्शनान्मृषाभूतादेव सत्यभयकम्पादेर्जननम्। शुक्तिरजतविज्ञानान्मायिकादेवामायिकहर्षादेर्जननम्।

वस्तुतस्तु स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमेवानृतं तदवगतिस्तु सत्यमेव फलम्। प्रतिबुद्धस्याप्यबाध्यमानत्वात्। न हि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशनादिकार्यं मिथ्येति मन्यमानस्तदवगतिमपि मिथ्येत्यभिमन्यते व्यवहरति वा कश्चित्।

स्वप्नकार्यानृतत्ववादोऽप्ययं प्रबोधापेक्षयैव न स्वस्वरूपापेक्षया। यतः सुप्तस्य प्राकृतस्य पण्डितस्य वा जानस्य स्वप्ने उच्चावचान् भावान् पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं भवति प्राक्प्रबोधाज्जाग्रतीव महास्वापस्य प्राकृतत्वसाक्षात्कारात्। प्रबोधापेक्षमेव चेदं

मायामात्रत्वं स्वाप्नसृष्टेः प्रसाधितं भगवता सूत्रकृता 'मायामात्रं तु' इति। तदेव च प्रपञ्चितं भगवता भाष्यकृतापीति बोध्यम्।

अत एव च स्वप्नजागरयोरेकरूपतैव भगवद्गौडपादैरपि व्यवस्थापिता माण्डूक्यकारिकास्वागमप्रकरणे यथा —

कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ।
प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः॥
स्वप्ननिद्रायुतवाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया।
न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः॥
अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते॥ इत्यादि॥

तदेवं जाग्रत्प्रभववासनाप्रभवत्वात्स्वप्नस्य जाग्रद्भावनाभाविता-न्तरङ्गस्य प्रसजत्येव भावना स्वाभिमतविषया स्वप्नेऽपीति तदयोगा-नभ्युपगमाद्भवत्येव तत्र साक्षात्कृतिरपि स्वाभिमतवस्तुविषया। सूचितश्चायमर्थोऽन्यार्थप्रसाधनव्यग्रैर्विद्यारण्यस्वामिभिरपि —

'इत्थं जागरणे तत्त्वविदो ब्रह्मसुखं सदा।
भाति तद्वासनाजन्ये स्वप्ने तद्भासते तथा॥' इति॥

प्रसाधितमेव च पुरस्तात्तत्प्रामाणिकत्वादिकमपीति नास्यन्न वामार्थानुब-न्धिनः प्रबन्धस्य प्रामाणिकत्वाप्रामाणिकत्वोपादेयत्वानुपादेयत्वादि-विचारः क्षोदक्षम इति न तत्र क्रियतेऽतीव मया प्रयासः।

काव्यप्रभेदेषु चायं खण्डप्रभेदेऽन्तर्भवति। 'गद्यपद्योभयमयं चम्पूरित्यभिधीयते' इत्युक्तचम्पूलक्षणलक्षितत्वाच्चम्पूरिति चाभिधान-मात्रहति। विशिष्टं चास्याभिधानं भगवदनुधावनमिति।

## नामौऽचित्यम्

निरु पपदं च भगवत्पदं श्रीकृष्णस्यैवाभिधायकमिति प्रसाधितमेतदुपक्रम एवास्माभिः। स्वभक्तस्यास्य कवेः स्वस्मिन् भक्तिपरीक्षणार्थमिव स्वयमेवास्य पुरतः साक्षाद्भूय, संप्रार्थ्य च स्वयमेव तं स्वाभीष्टं भक्ष्यादिकं तत्प्रदानसमुद्यतेऽस्मिं तदगृहीत्वैव स्वयं पुरो धावन्तं श्रीकृष्णं भगवन्तं विविधैस्तन्महिमावेदकैः स्तवैः संस्तुवंस्तमेव चोपायैः रनेकैः संग्रहीतुं भक्तशिखामणिरयं कविरनुधावतीत्ययमर्थोऽत्र प्रबन्धे प्राधान्येनप्रतिपाद्यत इति प्रबन्धस्यास्य नाम कृतं भगवदनुधावनमिति। नामान्तरैरप्ययं प्रबन्धो निर्दिश्यते कविना तत्र तत्र यत्किञ्चिद्विशेषा-भिधित्सया यथा —

'श्रीबालगोपालविलासनाम्नी — कृतिं'
कृष्णलीलात्मिका कृतिः' —
राधामाधवपृष्ठधावनकथा
हरिचरिते
श्रीराधिकानाथपश्चानुधावनाभिधान — कृतौ
राधामनोनाथपदानुधावनाभिधानके इत्यादि।

चत्वारश्चात्राश्वासा भवन्ति। एषु चायं

## प्रमेयार्थसंग्रहः

तत्र तावत् प्रथमे आश्वासे पीताम्बरलाभनाम्नि:—

### उपोद्घाते

सांप्रतिकश्रीजगद्गुरु श्रीचन्द्रशेखरेन्द्रसरस्वतीस्वरूपा - नुवर्णनतत्प्रणतिपूर्विका स्वकृतिश्रवणस्वीकरणाभ्यर्थना, उमामहेश्व- रानुध्यानम्, कविवंशस्थलनामनिर्देशपूर्वक कृतिसमर्पणादिपूर्वपीठि- का, श्रीकृष्णतुष्ट्यै श्रीजगद्गुरुभ्यः स्वकृतिसमर्पणम्, स्वकृतिस्व - कुलस्वरूपनिरूपणपूर्वकं तद्ग्रहणप्रार्थनम्, कृतिपतिश्रीजगद्गुरुनमस्कृतिः, स्वत्वरूपानुकीर्तनपूर्वकमङ्गलाचरणप्रतिज्ञानम्, मङ्गलाचरणम्, सत्कवि- प्रणतिः कुकविप्रणतिः, भूसुराभिवन्दनम्, गुरुपरम्पराप्रणामः, देवता- गणप्रस्तुतिः, भागवतप्रणमनं च ।

### कृतौ

स्वावासवर्णनम्, प्रबन्धनिर्माणप्रयोजकस्वप्नकालादिकथनम् , स्वप्न एव श्रीकृष्णस्तवनम्, श्रीकृष्णसाक्षात्कृतिः, श्रीकृष्णानु - धावनम्, साक्षात्कृतश्रीकृष्णस्वरूपानुवर्णनम्, श्रीकृष्णकृतस्वाभीष्टभक्ष्या- द्यानयनाकांक्षणम्, भक्तस्य तद्दानोद्यमः, तदा श्रीकृष्णकृतधावनम्, सानुनयतर्जनसंस्तवनं भक्तकृततदनुधावनम्, पुनः पुनरनेकधा दशाव - तारस्वरूपमहिमाद्यनुवर्णनपूर्वकं स्वाहृतभक्ष्यादिस्वीकरणाभ्यर्थनम्, पुनः

श्रीकृष्णपलायनम्, अहेतुकश्रीकृष्णपलायनस्यानौचित्यकथनम्, स्वसंरक्ष - कत्वकथनम्, पुनः प्रधावतः कृष्णस्यानेकधा स्वरूपोल्लेखनम्, स्वस्वरूपनिश्चित्त्यै श्रुतीतिहासपुराणसूत्रगीतादिशरणीकरणं करणीय - मिति भक्तं प्रति श्रीभगवतो वचनम्, व्यासशुकनारदादीनामपि तत्राशक्तत्वकथनपूर्वं स्वस्वरूपतत्त्वकथनं स्वेनैव करणीयमिति सनिदर्शनं भगवन्तं प्रति भक्तवचनम्, अनुक्त्वैव पुनर्भगवतो धावनम्, भक्तानुधावनम्, भक्तभगवतोर्गन्तव्यदेशानुयोगप्रतियोगादिवर्णनम्, तथा धावनकारणानुयोगप्रतियोगादिवर्णनम्, पुनर्भगवतो धावनम्, स्वानुधावनाशक्तिनिर्वेदनिवेदनपूर्वं भक्तकृतं विस्तृतं श्रीकृष्णापराध - क्षमापनस्तवनम्, भक्तसंशोधनार्थमिव स्तवनमप्यनादृत्य पुनः प्रधावतः श्रीकृष्णस्य दिव्यमङ्गलविग्रहान्महार्घस्य कौशेयवाससः पीताम्बरस्य स्रंसनम् त्वरया तत्स्वीकृत्य विवृत्य पश्यति भक्ते ततो - ऽनेकप्रकारस्य लेखसञ्चयस्य विस्रंसनम्, तदावेदनपूर्वकं पुनस्तमनु- धावतो भक्तस्य पुनस्तत्स्तवनोद्यमः आद्याश्वासोपसंहरणं च।

द्वितीये

पीताम्बरशक्तिवैभवप्रख्यापकनाम्नि श्रीजगद्गुरुं प्रति स्वकृतिस्थ- द्वितीयाश्वासश्रवणाभ्यर्थनम्, स्वसम्पादितभक्ष्यभोज्यादिधारणप्रकारवर्णन- पूर्वकं पुनः श्रीकृष्णस्तवनम्, सोल्लुण्ठनं सविस्तरं च नूतनया कयापि सरण्या भगवतः पीताम्बरवर्णनम्, तद्रहितस्य ततो धावनानौचित्यकथनम्, लुप्त-

महिमत्वशक्तिविहीनत्वादिकथनम्. स्वारोपितपीताम्बरचौर्यदोषाभावकथनम्, पुनस्ततो धावने पीताम्बराप्रतिदानकथनं, ततः पीताम्बरनामलोपश्च भगवतः स्यादिति व्याजतर्जनम्, ततः क्रुद्धस्येव तूष्णीं स्थितस्य भगवत स्तुत्या परिसान्त्वनम्, पीताम्बरलाभेन स्वलाभस्य तद्धानेन भगवतो न्यूनतायाश्चाविष्करणपूर्वकं भक्ष्यादिपरिग्रहे तत्प्रतिदानप्रतिज्ञानम्, ततो भक्ष्यादिस्वरूपवर्णनपूर्वकं तत्स्वीकरणप्रार्थनम्, तदप्यनादृत्य भगवतः कदध्वना धावनम्,कदध्वनि तदनुधावनाशक्तस्य भक्तस्य तन्मार्गोपरोधकनूत्ननानावस्तुविशेषाविष्करणेन भगवतस्ततो निवर्तनोद्यमः तत्रापि वैमुख्यमावहति भगवति तद्दुश्चेष्टादीनां तत्पित्रोस्तद्भक्तेषु तथा ऋषिसमाजे गोलोके तथैव तद्बन्धुषु निखिलासु दैनन्दिनवारिक-पाक्षिकमासिकादि पत्रिकासु विदेशेष्वप्याविष्करणकथनेन भक्तकृतं परितर्जनम्, ततः किञ्चिन्मन्दगतिना भगवता स्वकरग्रहणोद्यते स्वभक्ते स्वीयामूल्यकाञ्चीदामाबद्धहेमकिंकिणीकापहारित्वदोषारोपणम्, ततोऽति-भीतेन भक्तेन तत्परिजिहीर्षाव्याजेनैकां ऐन्द्रजालिकविद्यापरनामधेयां पीतांबरविद्यां प्रदर्शयता तत्समर्पणम्, पुनः पीताम्बरवैभवप्रकटीचिकीर्षया अपरां पीतांबरविद्यामादर्शयता भगवतोऽनेकविचित्रचित्रादिप्रदर्शनम्, पुनर्भक्ष्यस्वीकरणप्रार्थनम् एवमप्यस्वीकरणे स्वापरिमितमानुष्यकसाहाय्यबलेन बुद्धिशक्त्या च भगवतो बन्धनमवश्यंभावीति प्रतिज्ञानम्, द्वितीयाश्वासोपसंहरणं च ।

## तृतीये

पीताम्बरार्पणहृष्टश्रीमाधवलाभनाम्नि-श्रीजगद्गुरुस्तवनम्, युक्तेस्सकलार्थसाधकत्वनिदर्शनम्. स्वानुमताया भगवद्बन्धकशास्त्रयुक्तेस्तादृश्या एव लौकिकयुक्तेश्च प्रकारनिदर्शनम्, तत्तद्देशविशेषाणां तत्तद्देशविशेषनिवासिनां प्रभूणां पण्डितानां भक्तवराणां च नामनिर्देशपुरस्सरं श्रीकृष्णग्रहणसमर्थायाः स्वसहायसम्पत्तेरतिविस्तरेण कथनम्,सहायसम्पत्तिश्रवणाद्भीतिमिवाभिनयताभगवता भक्तसंमोहनार्थं स्वसहायानां गोपार्भकाणामाह्वानम्, तेषां सङ्कल्पमात्रात्तत्रागमनम्, भक्तकृतगोपार्भकस्वरूपवर्णनम्, गोपार्भककृतसोल्लुठनश्रीकृष्णपरिसान्त्वनप्रकारकथनम्, ततो गोपार्भकवचनश्रवणाद्भीतस्यात एव परिकम्पितसर्वांगस्य भक्तस्य भगवच्चरणशरणीचिकीर्षया भगवदन्तिकगमनपूर्वं तत्स्तवनम्,ततो भगवद्विश्वरूपदर्शनसभीतार्जुनकृतश्रीभगवद्गीतास्थश्रीकृष्णस्तवनवचनानुवादपूर्वकं पुनः श्रीकृष्णापराधक्षमापनस्तवनम्, ततो गोपार्भकपिधानेन स्वावशेषस्य भगवतो दर्शनम्. ततो हृष्टान्तरङ्गेन भक्तेन भगवत्प्रपत्तिपूर्वकं तन्निरुरुत्सया तद्गूढचरितानुबन्धिनः तद्दिव्यमङ्गलविग्रहच्युतपीताम्बरगलितलेखसञ्चयस्य स्वकक्षनिक्षेपसुरक्षितस्य स्वहस्तगतत्वावेदनम्, तत्स्वीकरणाय मन्दं मन्दं स्वान्तिकजुषे भगवतेऽतिवेलानन्दतुन्दिलहृदयेन भक्तेनैकैकशः पठितस्य लेखसञ्चयस्य क्रमशः समर्पणम्, तत्रोद्धवलेखस्यार्धपठने तद्रहस्यानुद्धाटनेच्छया भक्तहस्ताद्भगवता हठात्तदाकर्षणम्,तथाकरणे शि-

छलेखापदानकथनम्, भक्तेन पुनर्निर्बन्धतस्तल्लेखलेखनप्रकारपठनम्, तत्र नानाप्रकारभगवत्प्रणयिजनानुप्रेषितोपायनप्रकारानुवाचनम्, ततः सर्वलेखार्पणपरितुष्टं भगवन्तं पदयोर्निपत्य ग्रहीतुकामे भक्ते पुनर्भगवतो लघु धावनम्, सनिर्बन्धं भक्तस्य पुनरनुधावनम्, ततः कोपेनेव परावृत्तस्य भगवतः स्वहृदयदयितां राधिकां विहायान्यान्, देवान् स्वमपि प्रस्तुतवतस्तव भक्ष्याणि न रोचते मह्यमिति कथनम्, भक्तेन च सुनिपुणं तथाकरणकारणोपन्यासः, पुनः श्रीकृष्णगमनम्, पुनर्भक्ताभ्यर्थनम्, न चेत्त्वमेवमपि प्रसीदसि इतः परमाशुतोषं पार्वतीपतिमाश्रयामीति भक्तोक्तिः, पुनर्लिकुचफलचतुष्टयं हस्तेकृत्यप्रदर्श्य तेषां तत्कान्ताभिः प्रेषितत्वोक्त्या तत्परिचरणाय तत्प्रियजनाह्लादनोक्त्या च भगवत्प्रलोभनम् पुनर्जिगमिषति भगवति शपथोक्तिश्रावणम्, ततोऽन्ततस्तिष्ठता भगवता भक्तपरिसान्त्वनम्, तदा च सप्रश्रयप्रेमगद्गदं भगवन्महिमानुकीर्तनपुरस्सरं भक्तकृतं भगवदालिङ्गनम्, दिव्यमङ्गलविग्रहस्य भगवतः प्रलपीताम्बरेणालङ्करणम्, पुनः परिरम्भणम्, तन्निवर्तिताखिलपरिश्रमेण भक्तेन लीलाशुकवाग्भिः पुनरभिष्टवनम्, तत्करावलम्बनम्, तद्गण्डपरिचुम्बनम्, तच्छिरस्समाघ्राणम्, पुनस्तत्स्तवनम्, भूयोभूयस्तत्प्रदक्षिणीकरणम्, पुनः पादग्रहणम्, आनन्दातिरेकान्मोहोपगमः, पुनर्लब्धस्मृतेर्भक्तस्य भगवतः पुरतः स्थितस्य भगवते स्वकरतलस्थितसमस्तभक्ष्यप्रकरसमर्पणोद्यमः, तृतीयाश्वासोपसंहरणं च ।

## तुरीये

भगवत्कृपामृतप्रादुर्भावस्याभिधाने — श्रीजगद्गुरुस्तवनं - मनतुरीयाश्वासश्रवणप्रार्थनानि, श्रीकृष्णसर्वाङ्गपूजाविधानम्, भक्ष्य-हृतिभक्षणविलम्बभिया धूपाघ्रापणदीपदर्शनादीनां क्रमिकाणा - न्यकरणं संग्रहेण करणं मनसा करणं वा सोल्लासमेकैकस्वरूपनिर्वर्णन-पूर्वकं सुपाकनिपुणसम्पादितस्वाहृतभक्ष्यभोज्यचोष्यलेह्यपानीयादिप्रकर-स्वीकरणाभ्यर्थनम्, श्रुतैतद्वृत्तांतायाः ससंभ्रमं कुतोऽप्यकस्मात्तत्र सन्नि-हितायाः सपरिवारायाः स्वधर्मपत्न्याः स्वरूपस्थितिवर्णनम्, तथै-व शकटारोपितभगवत्समाराधनार्थकदलीपर्णफलादिसकलसम्भारसंभृतानां सानुयात्रिकाणां स्वमातुलद्वयस्वसम्बन्धिस्वभ्रातृष्पुत्रस्वभ्रातृजामात्रा - दीनां तत्रागमनवर्णनम्, तत्कृतभगवदुपस्थानप्रकारस्य विशेषतो वर्णनम्, श्रुतैतद्वृत्तान्तानां परिसरग्रामवासिनामाचण्डालमागोपालं च तत्र सन्धीभूतानां काकतालीयमहासुकृतलभ्यैतादृशसमागमसन्दर्शनपरिहृष्ट - स्वान्तरङ्गानां भगवन्तं प्रति संस्तवनम्, ततो भक्ततत्सम्बन्धिकृतस्वानुचर-गोपालबालभगवदभ्यवहारार्थसाधनसज्जीकरणपरिवेषणमन्त्रजपोपचारवचन व्यजनवीजनसुगन्धिचन्दनचर्चनतांबूलवितरणादीनां वर्णनम्, भक्तचेलांच-लपरिमृष्टमुखोदरपाणिपादस्य दृढपरिहितपीताम्बरस्य स्वकराभ्यां भक्तगलं दृढमालम्ब्य भक्तस्कन्धमेवाधिरूढस्य भगवतः स्वस्कन्धाधिष्ठितभगवच्चरणं भक्तं प्रत्यनेकपर्वतस्वार्थोपदेशवर्णनम्, भगवद्भागवतबन्धुवर्गाणामन्तर्धिः,

द्वितीयाद्वितीयस्य भक्तस्य परिशेषः, प्रथमं प्रमुष्टसंज्ञेन पश्चात्स्वपत्न्या-चरितशिशिरोपचारलब्धसंज्ञेन च भक्तेन स्वप्रत्यभिज्ञागोचरीकृतं भगवन्तं प्रति पुनर्दर्शनदानयाचनविलापनादिकथनम्, पुनर्मूर्च्छोपगमनम्, पुनस्स्वपत्न्युचारात् संज्ञोपलब्धिः, भगवत्प्रेरितस्य महतो देवस्य भवानीपतेस्तदा तत्राविर्भवनम्, भक्तकृता भवभवान्योः संस्तुतिः, महादेवकृतभक्तपरिसान्त्वनपूर्वतत्त्वोपदेशवर्णनम्, भवभवान्योरन्तर्धानम्, अन्तर्हितं भगवन्तं भवानीपतिमनुधावतो भक्तस्य तस्मै स्वावस्थाविज्ञापकवचनकथनपूर्वकं सहर्षनर्तनम्, तदा च संभ्रान्तैः पार्श्वस्थैस्तत्प्रबोधनम्, तेभ्यः कविना स्वानुभूताखिलस्वप्नवृत्तानुवर्णनम्, तच्छ्रवणपरिहृष्टान्तरङ्गैः पार्श्वस्थैः कृतं श्रीकृष्णस्तवनम्, स्वानुभूतिस्वरूपनिर्धारणम्, श्रीकृष्णप्रीतिसंप्रार्थनम्, स्वकृतिप्रचारणार्थमाशंसनम्, सर्वार्थस्वस्त्ययनम्, स्वकृत्युद्देश्यस्य स्वयमेवाविष्करणम्, स्वकृतिस्वरूपकथनम्, पुनरपि स्वकृतिकरणोद्देश्यकथनम्, ततः श्रीजगद्गुरुप्रणतिस्वग्रन्थस्वीकरणाभ्यर्थनपूर्वं तुरीयाश्वासोपसंहरणंच ।

तदेतादृशातिविचित्रेतिवृत्तचित्रितोऽयं प्रबन्धो निर्मत्सरमिममापादचूडमनुशीलयतां सहृदयानां काव्यभिसंहितयैव नीत्या श्रीकृष्णपरितोषणो द्राक्षासदृक्षवचोनिकरगुम्भितः श्रुतिस्मृतिन्यायेतिहासपुराणादिसिद्धसारार्थगर्भितोऽत एव सद्भक्तिविज्ञानविरक्तिबोधकः, श्रीगोविन्दसन्दर्शनसत्फलः साधुसङ्गतोऽसङ्गतार्थवर्जितोऽनवद्यहृद्यसत्पद्यगद्यविभूषित

श्रीकृष्णभक्तिरससम्भृतश्चेति निश्चप्रचं भायादेवेति नात्र तद्विस्तरापेक्षा। अथाप्युच्यते किञ्चिदत्रत्य: प्रत्न: पीताम्बरस्वरूपलेखसञ्चयानुवाचनप्रत्यर्पणभगवत्सर्वाङ्गपूजनपरिवेषणभोजनसेवनादीनां बहूनां वर्णनाप्रकारो बलादेवावर्जयेन्मानसं समेषां सहृदयानामावर्जितमेव च सुदृढं मे मानसमिति। अनितरसाधारणी सन्दर्भसमुचिता चात्र तत्र तत्र कथासंघटना दरीदृश्यते। भगवद्भक्तिरसपरिपोषणैकतानेऽप्यत्र प्रबन्धे शब्दार्थगुणालंकाररीतय: कविसमयसमादरणीया: प्रतिपदं समादृता एव कविनेति नातोऽधिकमवशिष्यतेऽत्र वक्तव्यम्।

ननु भक्त्याख्यो रस एव नास्ति। आलङ्कारिकमूर्धन्यैस्तस्यासंप्रतिपत्ते:। तथा हि—तेषु हि केचिदष्टावेव रसा: शृङ्गारो हास्य: करुणो रौद्रो वीरो भयानको बीभत्सोऽद्भुतश्चेति संप्रतिपन्ना:। यद्यप्येवं दृश्ये, श्रव्ये तु शान्तेन सह नवैव ते रसा भवितुमर्हन्ति। अत एवोक्तं श्रीमम्मटभट्टै: — 'अष्टौ नाट्ये रसा: स्मृता:' इति। 'शान्तोऽपि नवमो रस:' इति च इत्यन्ये। अविशेषेणोभयत्र दृश्ये श्रव्येऽपि च नवापि रसा भवितुमर्हन्ति। अत एवोक्तं श्रीविद्यानाथेन—

'शृङ्गारहास्यकरुणा रौद्रवीरभयानका:।
बीभत्साद्भुतशान्ताश्च रसा: प्राच्यैरुदाहृता:॥' इति॥

तथाहि भरतमुनिनाप्युक्तं अविभज्यैव —

'शृङ्गारहास्यकरुणा रौद्रवीरभयानका:।
बीभत्साद्भुतशान्ताश्च काव्ये नव रसा: स्मृता:॥' इति॥

सङ्गीतरत्नाकरे चरमाध्यायेऽप्युक्तम् —

'अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्।

तदचारु यतः कश्चिन्न रसं स्वदते नटः ॥' इत्यादि ॥

भगवद्भक्तिरसायनेऽप्युक्तं 'नवरसमिलितं वा' इति। इति चापरे। तदेवं रसानामष्टत्वनवत्वयोरेव परं तैः कोलाहलः प्रवर्तितो न दशत्वे नापि भक्ते रसत्वे। प्रत्युत भक्ते रसत्वं कैश्चित् प्रतिषिद्धं विज्ञायते। यतः श्रीमधुसूदनसरस्वतीभिर्भक्तिरसायने स पक्षःक्वचिदनूदितो दृश्यते —

'रतिर्देवादिविषया व्यभिचारी तथोर्जितः।

भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥' इति ॥

तदेवं सति कथमत्र भवतोच्यते 'भक्तिरसपरिपोषणैकतानेऽप्यत्र प्रबन्धे' इति चेत्, आयुष्मन् पठ वा समग्रं भक्तिरसायनं शृणुवेदं तदुक्तं किमपि वाक्यजातम्।

रसान्तरविभावादिसंकीर्णा भगवद्रतिः।

चित्तरूपवदन्यादृग्रसतां प्रतिपद्यते ॥ 2 73

रसान्तरविभावादिराहित्ये तु स्वरूपभाक्।

दशमीमेति रसतां सनकादेरिवाधिकाम् ॥ इति ॥ 2 74

न चास्याः शान्तेऽन्तर्भावात् कथमधिकत्वमिति शंक्यम्। शान्तस्य निर्वेदस्थायिकताया एवान्यत्र प्रसिद्धत्वात् युक्तत्वाच्च। अत एव चात्रास्या दशमत्वोक्त्या शुद्धरतिस्थायिकत्वादिकल्पना शान्तरसस्याप्रामाणिकीति विभावनीयम्।

किञ्चात्र स्मरणीयं भवता तत एवचात्रास्माभिः पूर्वोद्धृतं वचनजातम् —

रतिर्देवादिविषया व्यभिचारी तथोर्जितः ।
भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥ 2 75

देवान्तरेषु जीवत्वात्परानन्दाप्रकाशनात् ।
तद्योज्यः परमानन्दरूपे न परमात्मनि ॥ 2 76 इति ।

वस्तुतस्तु —

कान्तादिविषया वा ये रसाद्यास्तत्र नेदृशम् ।
रसत्वं पुष्यते पूर्णसुखास्पर्शित्वकारणात् ॥ 2 77

परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः ।
खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा ॥ 2 78

परमार्थतस्तु —

क्रोधशोकभयादीनां साक्षात्सुखविरोधिनाम् ।
रसत्वमभ्युपगतं यथानुभवमात्रतः ॥ 2 79

तथानुभवसिद्धोऽपि सहस्रगुणितो रसः ।
जडेनेव त्वया कस्मादकस्मादपलप्यते ॥ 2 80

तत्साधूक्तमेवैतत् भगवद्भक्तिरसेत्यादीत्यलमतिपल्लवितेन ।

### काव्यरसः

एष एव च सपरिकरो रसः कविनात्र निबन्धे प्राधान्येनोप-

निबद्धः । तथा हि :— शुद्धसत्त्वद्रुतचित्तोत्पन्ना भगवद्विषयिणी सुपरिदृढा रतिरेव भक्तिरसस्थायी । तथा ह्युक्तं भक्तिरसायने —

'रजस्तमोविहीना या भगवद्विषया मतिः ।
सुखाभिव्यञ्जकत्वेन रतिरित्यभिधीयते ॥' इति 2 58

'स्नेहस्यैव विकारः प्रिययोरत्यन्तभावनादनिशम् ।
विरहासहिष्णुतात्मा प्रीतिविशेषो रतिर्नाम ॥' इति च 2 59

सा चात्रौपक्रममान्तं च सामान्यतो विशिष्य च—

'तथापि । चेतो मदीयमतसीकुसुमावभासं
स्मेराननं स्मरति गोपवधूकिशोरम् ।'

इत्यत्रोपनिबद्धा । इयं च चित्तापकतया तद्द्रुतिकारणानां द्विप्रकार-काम-द्विप्रकारक्रोध-भय-दास्यसख्यतदुभयात्मकसेव्यसेवकभावपाल्य-पालकभावोभयलक्षणस्नेह-चतुर्विधार्ष-शोक त्रिप्रकारदया त्रिविधो त्साह-शमादीनां भेदादनेकधा भिद्यते । तदुक्तं भक्तिरसायने —

'चित्तद्रुतेः कारणानां भेदाद्भक्तिरनेकधा ॥' इति,
यावत्यो द्रुतयश्चित्ते भावास्तावन्त एव हि ।
स्थायिनो रसतां यान्ति विभावादिसमाश्रयात् ॥' इति च ।

प्रपञ्चितश्चायमर्थः सोत्सर्गापवादं तत्रैवेति स तत एव सहृदयैर्विभावनीयः । भावनार्थं त्विह संक्षेपतः केचिदुपस्थाप्यन्ते ।

कामजे द्वे रती शोकः प्रीतिभीविस्मयास्तथा ।
उत्साहोऽपि च दाने यो भगवद्विषया अमी ॥ 2 31

व्यामिश्रभावरूपत्वं यान्त्येते क्षीरनीरवत् ।
विभावादिसमायोगे तथा भक्तिरसा अपि ॥ 2 32

शुद्धा च वत्सलरतिः प्रेयोरतिरिति त्रयी ।
भावान्तरामिश्रितत्वादमिश्रा रतिरुच्यते ॥ 2 34

तदेवं —

केचित्केवलसंकीर्णाः केचित्सङ्कीर्णमिश्रिताः ।
केचित्केवलमिश्राश्च शुद्धाश्च स्युश्चतुर्विधाः ॥ 2 37

तत्रापि —

विशुद्धो वत्सलः प्रेयानिति भक्तिरसास्त्रयः ।
रसान्तरामिश्रितास्ते भवन्ति परिपुष्कलाः ॥ 2 35

पुनश्चेयं सोपाधिनिरुपाधिरूपाभ्यां द्विप्रकारा दर्शिता तत्रैव यथा —

शुद्धा व्यामिश्रिता चेति पुनरेषा द्विधा भवेत् ।
तत्रानुपाधिः शुद्धा स्यात्सोपाधिर्मिश्रितोदिता ॥ 2 65

अनुपाधिः परानन्दमहिमैकनिबन्धना ।
भजनीयगुणानन्त्यादेकरूपैव सोच्यते ॥ 2 66

विभावादिसमायोगे शुद्धभक्तिरसो भवेत् ।
कामसम्बन्धभयतः सोपाधिस्त्रिविधा भवेत् ॥ 2 67

शृङ्गारमिश्रिता भक्तिः कामजा भक्तिरिष्यते ।
सम्बन्धजा रतिर्ज्ञेया पूर्वोक्तरसयोर्द्वयोः ॥ 2 68

एको वत्सलभर्त्तंयाख्यः प्रेयआख्यस्तथापरः ।
भयजा रतिरध्यास्ते रसं प्रीतिभयानकम् ॥ इति । 2 69

तदेवं शुद्धया रत्या शान्तः, कामजया शृङ्गारः, सम्बन्धजया सख्य-वात्सल्ये, भयजया दास्यं चेति पञ्चाप्यत्र मुख्या भक्तिरसाः संगृहीता इति सुधीभिर्विवेचनीयम् , प्रायेण चैष्वेकैक एव सुलभसम्पादोऽथवा दुःसम्पादः साधकेषु मध्यमन्दगतीनामिति, एषु क्वचिदेव यत्रान्तर्यामिप्रेरणादिना चित्तमुन्मुखीभवेत्तत्रैवाभ्यासं कुर्यात्साधनेच्छुरिति शास्त्र-रहस्यम् । तदप्युक्तं भक्तिरसायने —

एकद्व्यादिरसव्यक्तिभेदाद्रसभिदा भवेत् ।
तस्मात् क्वचित्तदभ्यासं कुर्याद्रतिचतुष्टये ॥ इति । 2 71

न चात्र 'कामसम्बन्धभयतः' इति 'भयजा रतिरध्यास्ते' इति च भयशब्दसमावेशाद्भेतव्यमृजुमतिभिः । न ह्यत्र व्यालादेरिव भयं विवक्षितं किन्तु दासैर्गौरवमर्यादासंरक्षणसम्भ्रमादितो यथा प्रभुतो भेतव्यं तथा भगवत इति तादृशमेव हि निविवेशयिषितम् । तच्च दास्यस्थायिन्याः प्रीतेरनुगुणमेव । तत एव च तत्र तद्व्याख्यावसरे ग्रन्थकृतैव 'रसं प्रीतिभयानकम्' इति प्रीतिशब्दोऽपि संयोजित इति बोध्यम् ।

इदमप्यवधेयमत्र यदेकैकस्मिन्नाश्रये एकैकै व नियमेन रति-रुत्पद्यमानोत्पद्येत न समुदितेति नेयं राजाज्ञा। किं तु प्राग्भवसञ्चित-पुण्यपुञ्जपरीपाकलब्धजन्मविशेषे व्रजवीजनतुल्यगुणेऽप्युत्तमे भागवतधुरीणे क्वचिदेकाश्रय एव स्वस्वकारणसामग्रीसमवधानविशेषादेकदैव कदाचित् काम सम्बन्धद्वय-भयजानां रतीनां चतुष्टयमाविरियादेवेति। तत्र च पानकरसन्यायेनानुभूयमानश्चित्ररसोऽपि कश्चित् चित्ररस इव चित्रवर्ण इव च लौकिको दुरपह्नव एव। एतच्चोक्तं भक्तिरसायने —

एकदा यद्यपि व्यक्तमिदं रतिचतुष्टयम्।
तदा तु पानकरसन्यायेन परमो रसः॥ इति॥ 2 70

तमिममेव चित्राभिधानं रसप्रकारं 'विभावानुभावव्यभिचारिसंयोगाद्रसनि-ष्पत्तिः' इति भगवद्भरतमुन्युक्तिनयमनुसृत्य तत्र तत्र तत्तत्सन्दर्भसमुचिता-नुद्दीपनविभावान् तुलसीचन्दनवनमालापीताम्बरादीन्, अनुभावन्नेत्रवि-क्रियास्मितगीतगात्रविक्षेपादीन्, सात्विकान् स्तम्भप्रलयरोमाञ्चादीन्, व्यभिचारिणश्च निर्वेदालस्यादीन् रत्या सुसंयोज्य सुनिबन्धने स्वनिब-न्धे कविरयं सुनिपुणमुपनिबबन्धेति प्रबन्धमेनं सुनिपुणं परितो निरूपयतां सुनिपुणमतीना मतिरोहितमेवेति सर्वं चतुरस्रम्।

## काव्यसमीक्षा

अन्ते चेदमवश्यावेद्यं किञ्चिदावेद्यते भावुकानां पुरतो यदियं काव्यकुमारिका निशान्तस्वप्नदृष्टव्रजवधूविटरतिभीतिसमाकुलया प्रसूत-

मातैव कविमाता भिषजं कंचनाथवा धात्रीं कांचनमामभिमन्यमानया मन्मित्रं महादेवनामानं कञ्चन द्वारीकृत्य ममान्तिकमुपनीता 'कीदृगिय' मिति परिपृष्टेन यावन्मया लोचनगोचरीकृता प्रथमतस्तावत् स्वयं सुगु - णापि स्वलङ्कारापि सुशोभनरसभावाभरितापीयं ममानभिव्यक्तवर्णगुणा- लङ्काररसभावेयमपरिपुष्टांगेव प्रतिभाता । यतस्सा शुद्धान्ध्रवर्णपटीसुघ- टितशरीरैव तदासीत् । तदाहमेवं कविमातरमवोचम् 'भवति, भावत्केयं भवदीयवर्णपटीसुघटितसर्वावयवा कथंकारं मया द्रष्टव्या । अदृष्टाचेयमी दृगिति कथं वा निर्धारणीया । यदि चेयं मयैवावश्यद्रष्टव्येत्याग्रहोऽसु- परिहरो भवत्याः तदा अपसार्यताभियं प्रथमतो भावत्कवर्णपटावृतिरिति । सद्यएव चेयं कुमारिका यदैव तदनुमत्यैव विघटितपूर्ववसना सुघटितसंस्कृत- नागरवर्णात्मवसना च सञ्जाता तदाहमशकमापादचूडमिमामवलोकितुं परिशीलितुं च । अवलोक्य परिशील्यचेमामापाततस्तन्मान्तरमहं पुनरब्रवम् 'दृष्टेयं सर्वाङ्गसुन्दरी । वर्धतामिति । सा मां पुनः प्राह — यथा — ननु भोः न केवलयाहमाशीर्लिप्सयाभवतो भवन्तम- लोपगता, किन्त्वेतस्यास्तत्त्वबुभुत्सया किमियं मया भक्तिपरवशीकृतस्वा- न्तरङ्गया भूतावेशेनेव परिकम्पितसर्वाङ्गया च प्रसूता सुपरिपूर्णस्वावयवा किं वा सुगुणपरिपूर्णा किंस्वित् दोषविधुरा किं चापि रसपुष्टेति । तद्यथावकाशमिमां भवान् सुपरिशोध्य, शोधितायाश्चास्या यदीयामुपा- देयगुणादिका स्यात् तदा तथेयमिति योग्यताचीटिकापि कापि भवता प्रदेयेति । तथेति तथैवेयं यथावकाशं यथामति च मया संशोध्य

समीक्षत्य च तत्र तत्रोपलब्धं अबलीयांसं न्यूनीभावं, दत्तेयं तत्प्रार्थनानुरोधिनी योग्यताचीटिका । अस्याश्च सदसद्भावे भावत्कमेव भावुकाः प्रमाणं सुहृदयमिति ।

## कार्तज्ञ्यनिवेदनम्

अपि चास्य प्रबन्धस्य परिशोधनानुक्रमणिकादिनिर्माणादिविषये मम कृतसाह्यानां श्रीयुत व्याकरणविद्याप्रवीण - श्रीमहादेवशास्त्रिणां - व्याकरणन्यायवेदान्तादिशिरोमणिबिरुदभाजां श्रीयुतरामानुजचार्याणां- च वितीर्यन्ते बहुशो धन्यवादा इति अत्र च प्रबन्धे एतत्प्रबन्धोद्दिष्टविशेषाणां नामानुक्रमणिका तत्तद्देशनिवासिनामनेकेषां महतां नामानुक्रमणिका चेत्यनुक्रमणिकाद्वयं शुद्धाशुद्धिपत्तं श्रीवेङ्कटेशशतकं चेत्यधिकतयापि केचन विषयास्संयोजिताः सहृदयहृदयमोदयेति चावेद्य सुस्थं सर्वमित्युपरम्यते ।

इत्थं

विद्वज्जनविधेयः

साहित्यविशारद-साहित्यशिरोमणि-

वेदांतशिरोमण्यादिबिरुदाङ्कितः

भगवत्पादीयभाष्यादिग्रन्थाध्यापकः

मद्रपुरराजकीयप्राच्यपुस्तकभाण्डाकारसंस्कृतपण्डितः

वरहूर् कल्याणसुन्दरशास्त्री

मद्रपुरी
24-7-55

श्रीः

క. రాధానాథ పదాంబుజ, మాధ్వీకస్యంద మధుకరా ! కృష్ణకవీ !
నీదుకృతి మోహనశ్రీ, గాథామంజులమునీరు కల మధుధునియే.

**मल्लवल्लशरभेश्वरशर्मणाप्रेषिता ।**

**महाकवि श्रीकाकवाकृष्णशास्त्रिकृतस्य**

**भगवदानुधावनास्यस्यग्रन्थस्यप्रशंसापत्रिका**

निर्वाणायास्तु जगतां निखिलागमसंस्तुतम् ।
प्रावृषेण्यपयोवाहश्यामलं कोमलं महः ॥

कलिग्रीष्माहसन्तापात् धन्त्रायितमिदं जगत् ।
हरिभक्तप्रपा कास्ते क्व वा मधुमुचो गिरः ॥

वाचामयनुमाधुर्यं भक्तिर्नैसर्गिकी हरौ ।
संमेलनं तदुभयोः जननान्तरपुण्यतः ।

प्राचां लीलाशुकादीनां रसोद्गारिगिरां पथि ।
स्तुताकृतिरसाम्भोधिः भासते हरिरत्र नः ॥

माधुर्यैकरसाम्भोधि शिखिपिञ्छाञ्चितं महः ।
स्मारं स्मारमिमां दृष्ट्वा कृतिमुच्छ्वसितं मनः ॥

इति
सुजनविधेयः
मल्लपल्लि शरभेश्वरशर्मा

CHANDRIKA PRESS, MADRAS-21.

॥ श्रीः ॥

ब्रह्मश्री आत्मविद्याभूषण श्री विद्यालङ्कार

# वे. जगदीश्वरशास्त्रिणां

## ॥ प्रस्तावना ॥

आपादादाचनाभेरतिरभसरमासुन्दरीकामकेली-

हारिद्रद्रावसङ्गद्विगुणितसुषमाडम्बरं लम्बमानम् ।

कालाम्भोवाहमालाविगलितचपलाभ्रान्तिसन्दायि यत्तत्

पीतं दद्यात्प्रमोदं कटितटघटितं चैलमाब्जेक्षणं नः ॥

भो भो विविधकाव्यनाटकालङ्कारादिसाहित्य सारसर्वस्ववेदिनः ! सहृदयाः ! मनीषिणः ! कर्णे कुरुत मदीयां विज्ञापनासूक्तिमञ्जरीं । विदितमेवेदं तत्र भवतां—यदुत संस्कृतभाषाऽपारपारावारतितीर्षूणां व्युत्पत्सूनां जनानां सरससत्काव्यसंपरिशीलनतरणिसमारोहणं विना नोपायान्तरमस्तीति । एतदर्थमेव महाकविभिः श्रीकालिदासभवभूत्यदिभिरधुनापि सहृदयहृदयचमत्कारजनकानि व्युत्पत्तिसंपादकानि रसभरितगद्यपद्यमयानि काव्यादीनि विरचितान्युपलभ्यन्ते । एतादृशकाव्यलक्षणादिविज्ञानार्थैव मम्मटादिदिभिः काव्यप्रकाशादिग्रन्थाः व्यरच्यन्त ।

इह खलु जगति समस्तमेव लौकिकं वस्तुजातमेकरूपमेकान्तसुखकरं नावतिष्ठते । पश्यामः किल प्रतिदिनं; प्रातः परिमलगुरूणि

**

नयनानन्ददायीनि यान्यासन् कुसुमानि, सायङ्काले पुनस्तानि सम्प्राप्त-भूतलानि संस्मरणीयगन्धीनि विगतशोभानि च नानन्दयन्ति नो नयनं। एवं पुरा ये खलु भारतभूमण्डलमिदं मण्डयामासुः धीराश्शूराः श्रीमन्तो धीमन्तो गुणोदारा उत्तमाः पुरुषाः, न खलु तेषां बहूनां कथाऽपि कर्णपदवीमधिरोहति ।

विचित्रेऽस्मिन्संसारे सुखदुःखमयेष्वतिक्रामत्स्वहोरात्रेषु प्रतिक्षणपरिणामिषु परश्शतेषु पदार्थेषु नास्त्येव वा तादृशं वस्तु किमपि यत् खलु सकृदुत्पन्नं अजरामरमेकरूपमपरिणामि ।

अस्तीत्येव ब्रूमः । स्फुरद्वाग्ब्रह्मणां सुखमयशब्दप्रपञ्चकल्पनाकुशलानां महाकवीनां नित्यशुद्धस्वभावं अनन्याधीनमविकारि आत्मज्योतीरूपं सूक्तिलक्षणं वस्तु ।

नादाभिधं तदेव ज्योतिर्जगदिदमवभासयत्यात्मना । अन्यथा अन्धमिदमखिलं भवेत् । महाकवयः खलु स्वप्नवत् दृष्टनष्टस्वभावे पाञ्चभौतिके पिण्डे न शरीरधियं निबध्नन्ति । अपितु चिरकालस्थायिना सूक्तिज्योतिश्शरीरेण शरीरिणो भवन्ति ।

नचेदमविदितं भावुकानां—यत्खलु महाकव्युपज्ञं अन्यादृशं सूक्तिसर्वस्वरहस्य मनन्यवृत्ति मनसि पुनःपुनर्भावयतो विगलितवेद्यान्तरं स्वानुभवैकवेद्यं रसमनुभवतश्च रसिकश्रेष्ठस्य श्रीकालिदासादयो महाकवयश्चक्षुर्विषयतामुपयान्तीव भान्तीति । अपरमपीदमाश्चर्यं कर्म सुकविसूक्तिसुधारसस्य—यत्किल भावनाप्रकर्षवशात् अतिक्रान्त-

दर्शनमपि कथाभागं, कथानायकं च पुरस्तादस्माकमवस्थापयतीति। तदुक्तमभियुक्तैः।

'चिरनिर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम्'। इति॥

एतादृशेषु सत्काव्यस्रष्टृषु एतद्भगवदनुधावननामक चम्पूप्रबन्धप्रणेता श्रीकृष्णकविरप्यन्यतमएवेति नः प्रतिभाति।

## काव्यस्वरूपम्।

सहृदयहृदयाह्लादजनकत्वमेव काव्यस्य संक्षिप्तं लक्षणमभिप्रयन्त्यालङ्कारिकाः। तच्च पद्यरूपं, गद्यरूपं गद्यपद्यमिश्रं वाऽस्तु, सर्वमपि तत्पूर्वोक्तलक्षणएवान्तर्भवितुमर्हति। अपिच काव्यं दृश्य श्रव्य भेदात् द्विधाभिन्नं। तत्र दृश्यं नाटकादि। श्रव्यं काव्यादि। चम्पूशब्दाभिधो भेदोऽप्येको भवति। तस्य लक्षणं च।

'गद्यपद्यात्मकं काव्यं चंपूरित्यभिधीयते'। इति विख्यातमेव। एतल्लक्षणसम्पन्नत्वादेवेयमपि प्रकृता कृतिः चंपूशब्देन प्रथते। एनामेवाधिकृत्य किञ्चिद्वक्तुमभिलषामः।

संस्कृतसाहित्ये पद्यप्रबन्धानां भूयसा प्रचारदर्शनेऽपि, गद्यप्रबन्धानां चंपूप्रबन्धानां चांगुलीपरिगणनीयतयाऽतिसंकुचितः प्रचार इति नाविदितमिदं विदुषां। कोवाऽत्र हेतुरित्यस्य प्रश्नस्य बहवो बहुधा समाधानं ब्रुवते। तत्रैकं समाधानपक्षं निरूप्य, सोपपत्ति विमृश्य च, पश्चात् प्रस्तुतं प्रक्रमिष्यामहे।

तत्र केचिदाधुनिका आहुः—संस्कृतभाषा तावल्लौकिकव्यवहारेषु नोपयुज्यत इति प्रसिद्धं अतएवास्य संस्कृतपदेन व्यपदेशस्संगच्छते।

सम्यक् कृतं व्याकरणादिना परिष्कृतमिति खलु तदर्थः। लौकिकव्यवहारोपयोगिनी च भाषा प्राकृती। प्रकृतिस्स्वभावः तत्सिद्धा भाषा प्राकृतभाषेति व्यवह्रियते। संस्कृतस्य लौकिकव्यवहारोपयोगित्वे खलु संस्कृतसाहित्ये गद्यबाहुल्यं स्यात्। तदभावाद्गद्यबाहुल्याभावो युज्यतएव। अतएवास्यास्संस्कृतभाषायामृतभाषात्वमपि समामनन्ति पाश्चात्यपण्डिताः केचिदिति।

पक्षोऽयं न क्षोदक्षमः—तथाहि - सेयं संस्कृतभाषा लौकिकव्यवहारेषु सांप्रतमपि विनियुज्यमाना नापलापमर्हति। अतएव रामेश्वरक्षेत्रस्थेन विदुषा, वाराणसीक्षेत्रवासिना पण्डितेन साकं गैर्वाण्या वाण्या व्यवहारः क्रियमाणो दरीदृश्यते। वैदिकेषु यज्ञादिषु विवाहोपनयनादिषु च संस्कृतेनैव व्यवहर्तव्यमिति नियमोपि व्यवहारोपयोगित्वमस्यास्सूचयाति। किं बहुना - भारते देशे साम्राज्यनिर्वाहस्सर्वोऽपि संस्कृतभाषयैव कर्तव्य इति यद्यधुना निर्णीयते, इदानीमेव तं निर्वोढुं पूर्णशक्तिरस्ति संस्कृतभाषायाः। संस्कृतस्य व्यवहारानुपयुक्तत्वे भाषात्वमेवास्य भज्येत। व्यवहारद्वारा स्वाशयमन्येषामाविष्कर्तुमवलम्बितः कश्चिदुपायो हि भाषा नाम।

पाश्चात्यानां मृतभाषात्वव्यवहारोऽस्या भ्रान्तिमूलएव। ये मृतभाषेतीमाममृतां भाषां जल्पन्ति, तएव मृतकल्पाः इति वदामः। एतादृशाः पुरुषाः प्रत्यक्षपरिकलितं गिरिनद्यादिपदार्थजातमप्यपलपेयुः। कलाशालासु कासुचित्पत्रिकासु विकटसंचिकादिषु च संस्कृतस्यादर्शनेन केवलं, मृतभाषात्वमस्या अध्यवस्यन् मूढ एव स्यात्। प्रत्युत तत्र संस्कृताप्रवेशो गुणायैव। परमपूज्यतमत्वात्संस्कृतभाषायाः।

आस्तां वा लौकिकव्यवहारानुपयोगित्वमस्या भाषायाः । तावता कथं गद्यप्रबन्धवैरळ्यं स्यात् । व्यवहारानुपयोगिन्याऽपि संस्कृतवाण्या गद्यप्रबन्धनिर्माणसम्भवात् । अतो लौकिकव्यवहारोपयोगाभावो न गद्यप्रबन्धवैरल्यकारणमिति ।

वयं तु पश्यामः—सङ्गीतकळा साहित्यकलाचेति द्वयमिदं समानयोगक्षेमं प्रसिद्धं । तथाचोच्यते—'संगीतमपि साहित्यं सरस्वत्यास्तनद्वयम्' । इति । मनुष्यमात्रस्य सति च कदाचिदानन्दाविर्भावे ज्ञातुरज्ञातुर्वा सुस्वरमपस्वरं वा सङ्गीतमाविर्भवतीति प्रतिदिनं प्रत्यक्षतः पश्यामः । एवं महाकवीनामानन्दभरितादन्तरङ्गात्साहित्यमपि निसर्गान्निस्सरति । तच्च पद्यरूपं विहाय नान्यरूपेण भवितुमर्हति । तत्रैव पुष्कलं गानसौकर्यं भवतीति सङ्गीतसमानयोगक्षेमत्वं निर्व्यूढं स्यात् ।

छन्दोबद्धा सरस्वती सङ्गीतसहोदरी सती सर्वाङ्गसुन्दरी कामिनीव मानसमाकर्षति महाकवीनां अन्येषां च भावुकानां । इदमेव पद्यप्रबन्धाविरचने बीजं भवितुमर्हति । सर्वो जन्तुस्सुलभं सुकरं च मार्गमभिलषति । पुरुषसदृशस्य गद्यस्य तु नैवमास्तिमनस आकर्षकं सौन्दर्यं । क्लेशेन महता सावधानेन मनसा च खलु महाकवयो गद्यकाव्यनिर्माणे संरभन्ते । सुखकरे सति मार्गे क्लिष्टेन पथा कवयः कथं सञ्चरेयुः । अतएव श्रीकालिदासादयः कवयः गद्यकाव्यरचनायां नादरमदर्शयन् । एतेनैव हेतुना चम्पूप्रबन्धा अपि विरलास्संवृत्ता इति निर्णेतुं शक्यते ।

प्राञ्चो हि महाकवयो महर्षयश्चाऽपथान्निवर्तनं सुपथि प्रवर्तनं च काव्यस्य परमं फलमभिप्रयन्तः इतरेषां कीर्त्यादीनामपि फलानामानुषङ्गिकतामाकलयन्तो लोकोत्तरगुणोत्तरस्य सुकृतिनः कस्यचन नाय-

कस्य चरितमाधिकृत्य,नवरसभरितैस्स्वीयवाग्विलासैरितिहासादीनि काव्या-
नि च रचयाम्बभूवुः । राज्यादिलोभेन पित्रादिमारकाणामतएव महा-
पातकिनां नराभासानां चरितानि काव्येषु नोपनिबध्नन्ति भारतीया महा-
कवयः ।

अतएवोपहसति कुकवीन् महाकविः कश्चित्—

'वर्णयन्ति नराभासान् वाणीं लब्ध्वाऽपि ये नराः ।
लब्ध्वाऽपि कामधेनुं ते लाङ्गले विनियुञ्जते'॥ इति ।

कुकविकृतकुकाव्यमुद्दिश्यैव "काव्यालापांश्च वर्जयेदि"ति
निषेधस्मृतिः प्रवर्तते । एवं च वेदमारभ्याकाव्यालापं धार्मिकमङ्गळ-
गुणवत्पुरुषवर्णनेनैवोपादेयतां भजते । नखलु महाकाव्येतिहासादि-
ग्रन्थानां पठनं श्रवणं च विनोदाय, नापि पाठ्यपुस्तकपरिवृत्तये ।
अपितु स्वहितश्रेयोमार्गविज्ञानायेति भारतीयविबुधानां सिद्धान्तः ।
एतैश्च भारतं पूतं भूषितं च वाभाति ।

पुरा खलु कवयो नकेवलं वर्णनायां, अपितु - शब्दे - अर्थे रसे
भावे व्यंग्ये रीतौ वृत्तौ पाके च सर्वत्र स्वीयां सूक्ष्मदृष्टिं निचिक्षिपुः ।
ततो व्रजत्सु वर्षगणेषु काव्यस्य प्राचीनादृतविशिष्टफलं विस्मृत्य केचित्
कवयः वर्णनायामेव दृष्टिं बबन्धुः । तत्रापि शृङ्गारवर्णनमेव काव्यस्य
जीवातुरितिच निरचैषिषुः । रसवस्त्वादिकमविगणय्य केवलं प्रासमयैः
शब्दजालैः कविलोकमाकुलीकृत्य स्वात्मानं विनोदयामासुः ।

उक्तं च महाकविना—

'विद्वत्प्रियं व्यंग्यपथं व्यतीत्य शब्दार्थचित्रेषु कलेर्विलासात् ।
प्राप्तोऽनुरागो निगमानुपेक्ष्य भाषाप्रबन्धेष्विव पामराणां ॥

कृतेयुगे व्यञ्जनयाऽवतीर्णं त्रेतायुगे सैव गुणीबभूव ।
आसीत्तृतीये तु युगेऽर्थचित्रं युगे तुरीये यमकप्रपञ्चः' ॥ इति ।

तदित्थं काव्यप्रपञ्चस्यातिविषमां दशामापतितामभिवीक्ष्य नितान्त-क्लान्तस्वान्तानामस्माकं भगवदनुधावननामाऽयं चम्पूप्रबन्धश्चक्षुर्गोचरतामयासीदिति महदिदं प्रमोदस्थानं । भवतापहारी भगवान् श्रीकृष्णचन्द्र एवात्र कथानायकत्वेन कविना तत्तुल्यनाम्ना समुपनिबद्धः । नान्यः कश्चन कापुरुषः । आमूलाग्रं विमृश्यमानेऽस्मिन् प्रबन्धे पुरुषोत्तमे भगवति कवेरस्य प्रेमभक्तिरसः परिपूर्णः प्रवहतीति सुस्पष्टं प्रकाशेत । भुक्तये मुक्तये वा नृणां भगवद्भक्तिं विना नाऽन्या गतिरिति ग्रन्थेषु घण्टाघोषः । भक्तिप्रधानत्वादेवोपादेयताग्रन्थस्यास्य-सिध्यति । काव्ये चात्र रसालङ्कारादिकाव्यलक्षणं सर्वत्र परिपूर्णतया दृश्यते । सरसललितमधुरप्रसन्नगम्भीरप्रौढत्वादयो गुणाः प्रतिपद्यमुपलभ्यन्ते । एतेनाऽस्य कवेर्वश्यवचस्त्वं स्फुटीभवति । एतत्काव्यगतानि पद्यानि गद्यानिच चारुतराणीति अनुवाचनेनैव झटिति प्रियपाठकानां सहृदयानां अर्थस्स्फुरेदेवेति नात्रास्माकं निरूपणभारः । शब्दताऽर्थतश्च प्राचो महाकवीननुकुर्वन्नपि विशिष्य भागवतकृतिमनुसरीसरीति । वृत्तिरत्र भूयसा भारती क्वचिच्च मध्यमकैशिकी । रीतिश्च प्रायशःपाञ्चाली । प्रायो द्राक्षापाकः क्वचिन्नारिकेळपाकश्च । रसश्च शान्तः । सच प्रेमभक्तिरूपः । कथाभागश्चात्रातिसंकुचितएव दृश्यते । कथैव नास्तीत्यपि वक्तुं शक्यते । प्रायशोमहाकवयोपि संकुचितं कथाशरीरमुपजीव्यैव नाटकादीन्यरीरचन् । अयमत्र कथांशः—

कवेरस्य कस्यांचिद्रात्रौ चरमयामे शुभावहः कश्चन स्वप्नस्सम-भूत् । तत्र सकलभुवनसौन्दर्यसारसर्वस्वं कटकमकुटादिदिव्यभूषण भूषितं निखिलकलाकलापनिलयं सद्योविकसिततामरसकुसुमशो - भाधिक्करणचणचरण नलिनयुगलप्रभं वेणुवादननिरतं बृन्दावनविहार-रसिकं परमानन्दमयदिव्यसुन्दरमूर्तिं भगवन्तं राधाकान्तं पुरोवस्थित-मद्राक्षीत् । दृष्ट्वा च तं तुष्टस्तुष्टाव । सचसुदूरमपससार । अयंच तत्पृष्ठतोऽन्वधावन् । वालकोपच्छन्दनानि फलाद्युपहारद्रव्याणि हस्ते गृहीत्वा वालकृष्णं वहुधा समाह्वयत् । सामदानाद्युपायैरुपच्छन्द्यमानोपि स मायाबालगोपालः मायामारीचः श्रीरामस्येव हस्तप्राप्य इव तस्य क्षणं स्थित्वा सुदूरं प्रधाव्य क्वचिन्निलीयावतस्थे । एवं त्वरिततरं धावतो भक्तभक्तिपरिशोधकस्य भगवतः श्रीकृष्णस्य कटितटविगलितं पीताम्बरं कवेः करगतमासीत् । अयमेव प्रथमाश्वासप्रमेयसंग्रहः । तदनु द्वितीया-श्वासे स्वहस्तगतपीताम्बरं अघटितघटनापटीयसी विष्णोर्मायारूपिणी शक्तिरिति विस्तरशो वर्णयति स्म कविः। पुनरपि पूर्ववदेव धावन्तमनुधावन् श्रान्तः व्याजस्तुत्यादिकं चकारायं । मध्ये च पद्येषु तत्र तत्रांग्लभाषा-पदानि "वाल्पोस्ट्" "ब्राड्कास्ट्" इत्यादीनि आन्ध्रप्रभाऽऽन्ध्र-त्रिलिङ्गवैदिकधर्मवर्धनीकल्क्यानन्दविकटस्वदेशमित्राहिन्द्वादिपत्रिकापदा - न्यपि प्रायुङ्क्त कविः ।

तृतीयाश्वासे स्वगृहीतं पीताम्बरं श्रीकृष्णाय समर्पयति । मध्ये च बहूनि स्तोत्राणि रचयति । बहूनां पण्डितानां भक्तानां मुक्तानां समाजानां क्षेत्राणां तत्र समुल्लेखो विद्यते । अन्ते च पीताम्बरदानेन सन्तुष्टं देवं यथावत्पूजयति ।

तुरीयाश्वासे भगवदनुधावनफलभूतभगवदनुग्रहं लब्ध्वा कविः कृतार्थतामगमदिति । प्रबन्धेऽस्मिन् संहृत्य पद्यानां संख्या अष्टशतोत्तरत्रिंशत् ।

## प्रबन्धप्रणेता ।

एतत्प्रबन्धप्रणेता श्रीकृष्णैकान्तभक्तवरः श्रीकृष्ण इति सुगृहीतान्वर्थनामा महाकविः । श्रीकृष्णैकभक्तोपि देवतान्तराणि नायं द्वेष्टि । प्रेमभक्तिनिदानभूतभागवतधर्मानुष्ठाननिष्ठेनानेनऽन्तर्यामिभावनया शिवसरस्वती स्वगुरुप्रभृतिभ्यो ग्रन्थादौ सभक्तिविनयप्रणामविधानेपिविशिष्य श्रीकाञ्चीकामकोटिपीठाधिपतौ कुलदेशिकतामुदाहृत्य भूयान् भक्त्यतिशयः प्रकटीकृतो विजयते ।

कविरयं काकवाकाह्वयामहाराभिजनः पञ्चद्राविडान्तर्गतान्ध्रब्राह्मणान्ववाये वेगिनाडु संज्ञकावान्तरशाखाविभागे आत्रेयगोत्रे समजनि । अस्य पितृनाम वेङ्कटकृष्णश्रौतीति । जननीनाम तु सुब्बलक्ष्मीरिति । अस्य पूर्वजा वंश्याः त्रिसप्तपूरुषं श्रुतिस्मृतीतिहासाद्यखिलविद्यापारदृश्वानः पंक्तिपावनास्सोमपीथिन आसन्निति ।

"त्रिसप्तपूरुषं यस्य वंशो वेदाङ्गभूषितः" इत्यादिप्रथमाश्वासप्रक्रमस्थपद्यैरवगम्यते । "बहुभ्यो बहु बोद्धव्यं" इति नीतिमनुसरन्नयं कविः बहुभ्य आचार्येभ्यो बहून् काव्यनाटकालङ्कारादीन् तर्कव्याकरणवेदान्तादिशास्त्रग्रन्थांश्चाध्यगीष्टेति प्रारम्भगतपद्यानि विमृशतां नः प्रतिभाति । स्वपितुस्सकाशात् वेदं काव्यानि च कानिचन समभ्यस्य श्री वेमूरि नरसिंहाख्य विख्याताद् आचार्यादन्यान् शास्त्रग्रन्थानग्रहीदिति च विज्ञायते ।

उक्तं चानेनैव—

गुरुं वन्दे कृष्णबुधं निष्णातं वेदशास्त्रयोः ।
यदुपज्ञं हि मे ज्ञानमशितानुग्रहकारकम् ।
वेमूरि नरसिंहाख्यान् गुरून् प्रख्यातसत्कवीन्
आहिताग्निकुलोत्पन्नान् वन्देऽहं विप्रसत्तमान् ॥ इति ॥

किं बहुना—

सर्वथाऽयं प्रबन्धो भक्तिशून्यानां भक्तिं, व्युत्पत्सुमाणवकानां व्युत्पत्तिं लम्भयन् विद्वदादरभाजनतां प्राप्नोतीत्यत्र न कोपि संशयः ।

अतोऽयं ग्रन्थ उत्तरोत्तरं प्रचीयतामाचन्द्रार्कमिति भगवन्तमुमाकान्तं आशासाना वयं विस्तरभीरव उपरमामः इति शिवम् ।

नव्यमिति नावमान्यं काव्यमिदं गद्यपद्यरसभरितं ।
भव्यगुणोऽपि रमेशो नव्यं नवनीतमेवयदमुष्णात् ॥

इत्थं विदुषामनुचरः
आत्मविद्याभूषणं, विद्यालङ्कार,
**वे. जगदीश्वरशास्त्री.**

॥ श्रीरस्तु ॥

# ॥ कृतिप्रशंसानवरत्नानि ॥

---

श्रीभगवदनुधावनकाव्यमुद्दिश्य

## ॥ पूज्यमहादेवशास्त्रिकृताभिनन्दनम् ॥

श्रीकृष्णदर्शनं प्राप्य स्वप्ने कृष्णाभिधः कविः ।
स्वानुभूतिं विवृण्वानः काव्यमेतदरीरचत् ॥ १

सत्कवेरस्य काव्यं श्रीगोपालचरितान्वितम् ।
गुणालङ्कारकल्याणहावभावचमत्कृतम् ॥ २

नक्तंदिवं सुविहितं कविनाऽऽदरेण
दामोदरस्य गुणरूपविभावनं यत् ।
स्वप्ने कवेस्सगुणविग्रहतां तदाप
कृष्णस्य, जाग्रति तदेव च काव्यरूपम् ॥ ३

सोऽयं कविः पशुपतिं कमलापतिं च
प्रोपास्त भेदमपहाय यदेकरूपम् ।
तद्राजते कविगता मधुरा सुभक्तिः
तस्या वृषाकपिकृपां परमां स चाप्नोत् ॥ ४

श्रीमद्वेङ्कटकृष्णसूनुरखिलाम्नायान्ततत्त्वार्थवित्
क्षेत्रं हालहलादनं त्वधिवसन् श्रीसुर्टिपल्याह्वयम् ।

स्वप्ने माधवदर्शनात्तकुतुकः काव्यं चकाराद्भुतं
गोविन्दाङ्घ्रिपथानुधावनयुतं स(त)त्पूरुषाणां मुदे ॥ ५

श्रीकृष्णग्रहणातुरेण कविना कृष्णेन सङ्कीर्तिताः
काव्येऽस्मिन्मृदुपद्यगद्यमधुरे नानादिगन्ताश्रयाः ।
विद्वांसो बहवस्स्वधर्मनिरता भक्ता महान्तो भृशं
सत्क्षेत्राणि बहूनि चात्र विबुधाः के न स्वदेरन्मुदा ? ॥ ६

जीयात्पाणिनितन्त्रवेत्तृदुहिता मीमांसकानामियं
युक्तायुक्तविचारचारुधिषणासम्भूषितानां स्नुषा ।
आलिः काव्यकलाविदामवरजा भक्तोत्तमानां तथा
प्रेमावेशविशुद्धभक्तिजननी दासी सतां सत्कृतिः ॥ ७

एतत्काव्यं काव्यकर्ता च जीयात् राज्यात्कृष्णो दीव्यतात्तद्गुणौघः ।
भक्तिस्तन्यात्ज्ञप्तिहेतुस्समन्तात् पायाल्लोकं पावनी वेदमाता ॥ ८

आपादचूडमालक्ष्य काव्यमेतत्प्रशंसनम् ।
महादेवेन पुल्योपनाम्ना संग्रहतः कृतम् ॥ ९

**Sri. K. P. MAHADEVA SASTRI,**

Vyakarana Vidya praveena,

*Sanskrit Pandit,*

CORPORATION HIGH SCHOOL,

Nungambakkam,

MADRAS

॥ श्रीमते सुदर्शनाय नमः ॥

अविद्यां स्वप्रकाशेन विद्यारूपश्छिनत्ति (नः) यः ।
स सुदर्शननिस्त्रिंशः सौतु नस्तत्त्वदर्शनम् ॥

समग्रभूसुरभासुरं श्रीमन्तं 'काकवाका' ग्रहारं चिरमलङ्कुर्णैः श्रीकाञ्चीकामकोटिपीठस्थानविद्वद्भिः—

उट्वडियम् - श्रीकृष्णशास्त्रिमहाभागैः विद्वद्वरेण्यैः प्रणीतस्यास्य रमणीयस्य निबन्धस्य

## सारविमर्शः

श्रीमद्भिरेभिः विपश्चिदपश्चिमैः शास्त्रिवर्यैः प्रसादितस्य, सुकुमारगुम्भगम्भीरस्य, संसारभोगिसन्दष्टजीवसुलभभेषजस्य, क्षिप्रमेव सदाचार्यकटाक्षजननद्वारा नन्दभवने नवनीतनटस्य जगतां नाथस्य श्रीमतो यदुनन्दनस्य सर्वतोभद्रमनवग्रहमनुग्रहं जनयतः, हृद्यस्य, मान्यस्य च निबन्धस्यास्य समुल्लङ्घितसीमानमुदारमहिमानं चेतसि सततं कलयतां विपश्चितामानन्दसुधापरीवाहप्रसरमुद्वेलमभिवर्णयितुं न कस्यापि मनीषा प्रस्फुरेदिति निर्विकल्पं प्रतिपादयामो वयम् ॥ कामं सन्तु च सतामभिरूपाणां श्रीसूक्तिषु मुधाऽऽग्रहवशादवद्यनिरूपणैकदृष्टयः कुदृष्टयः विसृष्टदुर्वचोवृष्टयः असंस्पृष्टसदृष्टयः ॥

अहो ! समुद्रस्य महतः तरङ्गसन्ततय इवास्य कृतिविशेषार्णवस्य वीचिपरम्परास्वरूपाः श्रीमद्भगवन्नामात्मकाः रसखण्डाः तत्र तत्र विपरिवर्तन्ते । ग्रन्थोदयोऽयं, मनसि मुहुर्मुहुरभ्यस्यमानभगवद्गुणानुभवास्वादजनकेन श्लाघारसात्मकेन घनीभूतरससारसमुच्चयेनामृतविशेषेणाऽऽपामरपण्डितं जीवराशेः पञ्चत्रिंशद्वर्षसम्मितां वयोऽवस्थां गम-

यति ॥ किंच यावदस्योदयस्य फलभूतयोः भगवदधीनयोः ज्ञानभक्त्योः श्रद्धादरौ न भवतः तावदेव जीवराशेः बलवता विधिना निन्दिताचारकरणादिबहुगर्ह्यकर्मोपाधिकसंसारचक्रेऽस्मिन् परिभ्रमणम् ॥

अथेदानीं विचार्यते तावत्किंचित्—किमेतदुदयसत्तामात्रेण प्रतिभवनं भगवदनुग्रहो भवति? उतैतदुदितप्रकाशमात्रेण? यदि चैकमनयोः सम्भवति कस्यचिद्भाग्यलेशेन? यद्यपि सुसूक्ष्मदृष्टिः कश्चन महता भागधेयेन प्रकाशमात्रे दत्तदृष्टिः? तदोभयोरपि विषये भगवदनुग्रहसाम्यं मुक्तकण्ठं स्वीकुर्मो वयं भगवदनुग्रहवैषम्यनिरासवादिनः। यथा प्रबुद्धस्य रात्रिन्दिवमन्धस्यापि कालभेदाः प्रयान्ति ॥

ननु च सर्वथायमभिनवः अदृष्टचरः अचर्चितपूर्वः अद्भुतकल्पनाविष्कारः समुपनतसर्वसम्पच्चेति विदांकुर्वन्तु महाभागाः। अहोऽयमन्योऽतिशयश्च—

ग्रन्थस्यास्य ग्रथयितॄणां श्रीमतां सुगृहीतनामधेयानां श्रीशास्त्रिवर्याणां स्वप्रवृत्तान्तः, श्रीमतो भगवतः वल्लवीलीलास्मेरस्य कामिनः वल्लवचक्रवर्तिनः गोपालडिम्भस्य मधुराभाग्यस्य परस्य ब्रह्मणः व्रजयोषिद्भिः विहृत्युन्मुखस्य स्मितविकसितवदनारविन्दस्य कालदेशादिविशेषेषु परिगृहीत शैशव, बाल्य, कौमार, यौवनाद्यवस्थस्य श्रीकृष्णस्य विमुग्धवल्लवीजनवासोहरणादिक्रीडालम्पटत्वं श्रीमद्भागवतादिषु कथाभिः पूर्वं प्रस्तुतमपि किंचन वस्तु एतद्ग्रन्थाध्येतॄणां सपद्येव ततोऽतिरिच्यमानतत्साक्षात्कारादीनातन्वानस्यास्य प्रबन्धरत्नस्य नर्वतामनवद्यतामनिमेषनिषेवणीयभगवद्रूपसौष्ठवानुभाव्यतां च समाकलयतीति ॥

चित्रमेतत्—यत् चिरपराधीनवृत्तिं स्वातन्त्र्यलेशविरहितं प्राज्ञेषु निगृहीतसंख्यमज्ञतमं मामपि ग्रन्थोदयोऽयं सहृदय हृदयाह्लादकृताभ्यर्थनयोः शोधनविमर्शयोरनयोरल्पीयसा भाग्येनाचूचुदत् । इति ॥

किं बहुना—

श्रीमान् पार्थसुसारथिर्विजयतां लक्ष्मीसखस्सर्वदा
वेदोक्तान् शुभदान् विभिन्नविषयान् धर्मान्पुनश्शाश्वतान् ।
रक्षन् वैदिकसङ्घमप्यनुपदं श्रेयः प्रजाभ्यो दिशं-
स्त्वैक्यं सन्दिशतात् पृथङ्मतजुषामास्तिक्यभाजामपि ॥ १

ऐक्यं प्राहुरुदारशुद्धमनसः केचिज्जनानां सतां
क्षेमायेति विहाय दुर्जनमतं मालिन्यमत्युत्कटम् ।
सर्वानिष्टनिवृत्तिसाधनविधौ बद्धादरश्चक्रभृ-
च्छ्रीमान् पार्थसुसारथिर्दिशतु नः सर्वोत्तमामेकताम् ॥ २

शिष्टाचारविचक्षणाः शुभधियः मान्यैः गुणैः संयुताः
सन्तस्सच्चरिताः शुभेषु कुशलाः श्रीकृष्णशास्त्र्युत्तमाः ।
जीयासुर्भुवि मङ्गलैः बुधवरैस्सर्वैश्च सम्पूजिताः
श्रीमत्पार्थसुसारथेः करुणया देदीप्यमानास्स्वयम् ॥ ३

पालवेङ्क परवस्तुकुलीन श्रीनिवासरघुराडनुजस्य ।
वागियं जयतु चेन्नपुरी वाविळ्ळमुद्रणपदे विबुधस्य ॥ ४

इति विदुषां विधेयः

पि. पि. श्रीनिवासरामानुजाचार्यः,

(वाविळ्ळप्रेस्) चेन्नपुरी.

॥ जय श्रीकृष्ण ॥

'सा वाक् यया तस्य गुणान् गृणीते' इति भागवतोक्तदिशा भगवतः कृपाविशेषात् भारतभूमौ लब्धजन्मनां समेषां रसायनमिः भगवदनुधावनानुसेवनं अश्रान्तं शान्तिदं शन्तमञ्च । सत्यपूता वाणी कर्मपूतं आचरणं मनःपूतं च चिन्तनं सार्वकालिकं सर्वविधजनता साधारणं अनाकलितकालसन्दर्भं अनपेक्षितशास्त्रचर्यं नियमानपेक्ष आबालगोपालसेवनीयं धर्माधारं आचरणं को हि नाम सुखमनैकान्तिक मभिलिप्सुः कृतज्ञः पुमान्न काङ्क्षते ।

तर्हीदमिदंकृपयोपलब्धं मृदितकषायसाधुभिरासेवितं निरहङ्कारिभिरनवरतमासेवितं श्रद्धालुभिः पुनःपुनश्चर्वितरसं शुश्रूषुभिरहमहमिकया दर्शितश्रवणौत्कण्ठ्यं मन्दामन्द-प्राज्ञाज्ञ समसनाराधनं लोकवेदपरिमुष्टहृदयानां ध्येयप्रकाशनं सद्यःसमाधानकारकं सर्वात्मस्नपनं कृष्णानुभावं गायन्तः ग्रन्थकाराः 'इदं हि पुंसः तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः । अविच्युतोऽर्थः कविभिः निरूपितः यदुत्तमश्लोकयशोऽनुगीयते' इति श्रवणस्मरणानुप्रेयं स्मारयन्तः कृष्णानुगृहीता मोदन्ते ।

निगमागमवेदान्तविशालवनचारिणाम् ।
भीतानां भवपान्थानां वासन्तिकगृहं नवम् ॥
श्रौतस्मार्तसदाचारचर्यातप्तशरीरिणाम् ।
आब्रह्मजविनं पथ्यं पद्मालयपरायणम् ॥

कृष्णाञ्जनच्छुरणमोचितशास्त्रदोषां सत्पादसेवनपराकृतचित्तमोहाम् ।
गोविन्दकीर्तनसुपावितकालदोषां कृष्णानुधावनकृतिं स्वकृतिं व्यधत्त ॥
यः स्वानुभावमखिलश्रुतिसारमेकं मार्गं परं भगवदुक्तिनिरस्ततापम् ।
सत्पादसाध्यमवलम्ब्य मुदा चकार श्रेयःप्रदं सुखकरं रसिकैरुपास्यम् ॥

इति गणेशप्रभोरभिनन्दनम्,

तिरुवल्लिकेणि.

जयश्रीनीलबाल

तवकथामृतं तप्तजीवनं कविभिरीडितं कल्मषापहं ।
श्रवणमङ्गलं श्रीमदाततंभुविगृणन्तितेभूरिदाजना: ॥ (X 31-9)

"The greatest and the noblest of the benefactors of all the worlds are those who are soaked in the nector of Krishna's Lilas, which cheer up the aggrieved, which are worshipped by the Sages and Seers, which cleanses the world of its impurities, and which fetch prosperity and peace to the listeners".

The greatest help a man can do to the world is by helping himself in the only proper way of loving Sri Krishna and by permitting others to see him do this. By his sincere devotion, the author has helped himself. By presenting this work, he has permitted the readers to see how he helped himself. The author of this work should, therefore, be considered a "**भूरिद**", because he gives us the best in the world-a narrative of his personal contact with Sri Krishna. We are greatly indebted to him for this Gift. The truth that Sri Krishna comes down on Earth and reveals Himself in all Beauty and Glory with the only object of winning the world through His limitless Love, embodied in the following and many

other verses of Srimad Bhagavatha, is amply illustrated in this work.

कलौजनिष्यमाणानां दुःखशोकतमोनुदं
अनुग्रहायभक्तानां सुपुण्यं व्यतनोद्यशः ।
यस्मिन्सत्कर्णपीयूषे यशस्तीर्थवरेसकृत्
श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनां ॥ (X 24 . 61&62)

Bhagavan Nama, whose infinite power to do good to the entire world has not yet been correctly gauged, is found in abundance in this work. From cover to cover, we are given the blissful company of almost all the holy saints and sages, visible and invisible, whose one object is to flood the world with Sri Krishna's Grace and Love. These two essential aids to tread the Royal Road of Devotion are found charmingly entwined in this work with the Beautifnl Form and the endearing sweet words of the Blue Boy of the Blessed Brindavan.

The background of this Gift of Divine Love by the author, is a record of his glorious dream. Dreams are, sometimes, the media adopted by the Lord when He chooses to bless His dear and unostentatious devotees in private. While dreams are unreal and beyond the reach of demonstration or advertisement to others, they are real experiences to the dreamers. Faith in the undemonstrated

Grace of God is His rare gift bestowed on a Blessed Few. The degree of esteem and regard, in which the narratives of such dreams are held, measures the holder's faith in the inscrutable and the powerful channels through which the Lord's Love flows towards all humanity. Those that implicitly believe in the possibility of the Almighty's kindness overtaking and overwhelming the world, quickly identify themselves with the author and share the author's Bliss in full.

The author dreamt that he saw a blue light of the very type, which the Beloved Saint Madhusudhana Saraswati longed for in his prayer:—

ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं
ज्योतिः किञ्चन योगिनो यदिपरं पश्यन्ति पश्यन्तु पश्यन्तु ते
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनेषु यत्किमपि तन्नीलं महो धावति ॥

The blue cloud assumed the shape of Sri Krishna surrounded by His dear and cheerful boys of Gokul. As soon as Krishna's eyes fell on the author, He asked him to bring Him immediately some sweet drinks and many kinds of eatables. The devotee got various kinds of sweet drinks and dishes prepared mentally and offered them to the Lord. Krishna did not accept them but ran away,

compelling the devotee author to run after Him. This work takes its title - भगवदनुधावन - from this running of the devotee behind the Bhagavan, which occupies the major portion of this work.

Even though the devotee knew that the pursued Boy was Sri Krishna, he desired Him to say who He actually was. Bhagavan referred him to his book-lore. Devotee confessed its helplessness. This humility enabled him to see that the Boy was none other than Krishna. From this fountain of Krishnadarsana-Anubhava flowed many verses in praise of Krishna's form, qualities and lilas. In His extreme joy, Krishna let His pitambar slip from His waist along with a bundle of letters tied in it. The devotee picked them up and followed the child Krishna, whose nakedness added to His Beauty. The devotee who was eager to hear Krishna speak, taunted him by ascribing the loss of His pitambar to His depriving the female children of Gokul of their clothes as they bathed in Jumuna on a December morning. This reference pleased Krishna. He feigned anger and retorted that the devotee was made to run behind Him as, in his previous birth, the devotee was Maricha, and as he then made Rama run after him. Tired by running behind the nimble and fleet-footed Krishna, the devotee threatened to cable the Lord's apparent mercilessness to all the Saints of the world and to

सम्प्रार्थितस्याप्यतिमात्रवेगात् प्रधावमानस्य च माधवस्य ।
गतिं निरोद्धुं परिहासवाक्यैः ज्ञात्वाऽवदं तं कृतकौतुकस्सन् ॥
श्रीशैलवासी किमु वेङ्कटेशः काञ्चीनिवासी वरदोऽसि किंवा ।
किं वा जगन्नाथसमाख्यदेवः श्रीरङ्गनाथः किमु वा वद त्वम् ॥
श्रीवेङ्कटेशो यदि वा भवान्क रामानुजार्यार्पितपुण्ड्रकानि ।
काञ्चीनिवासी वरदो यदि स्याः क नाभिसंशोभि महार्वरत्नम् ॥
त्वं श्रीजगन्नाथविभुर्यदि स्याः क पार्श्वयोस्ते सहजौ च तौ द्वौ ।
श्रीरङ्गनाथो यदि ते ह्युरस्था लक्ष्मीः क श्रीवत्ससमाह्वचिह्नम् ॥
भुवनमोहनसुन्दररूप भो ललितमन्थरकुञ्जरसद्गते ।
जलदमेचकरम्यतनो भवान्क इति मे न विभाति वदाधुना ॥१४१

इति शृण्वन्मम वचो भगवान् करुणानिधिः ।
धावन्विवृत्तवदनः प्रहसन्नेवमब्रवीत् ॥ १४२

भगवान्—

किं मां पृच्छसि मुग्धः सन् व्यासादीन् पृच्छ तानृषीन् ।
परावरज्ञा ब्रूयुस्ते श्रुतिद्वारा विचारय ॥ १४३
अष्टादश पुराणानि सूत्रगीतादिकान्यपि ।
मत्तत्त्वं ते ह्यवगतं स्याद्वक्तुं नाहमुत्सहे ॥ १४४
लोके यः कोऽपि न ब्रूयात्स्वं प्रभावमलज्जितः ।
आत्मश्लाघा न कर्तव्या परनिन्दा तथैव च ॥ १४५
इति वाक्यात्स्वप्रभावं नाहं वक्तुं समुत्सहे ।

इति वादिनि देवेशे तदानीमेवमब्रवम् ॥ १४६

---

व्यासस्तु भगवान्मौनी प्रतिभासंयुतः कविः ।
जानन्नपि भवत्तत्त्वं ग्रन्थजालेषु वन्दिवत् ॥ १४७

अनिश्चितार्थैर्वचनैः श्रोतुश्चित्तविमोहकैः ।
गुणीति निर्गुण इति प्रोवाच च मुहुर्मुहुः ॥ १४८

शुकोऽपि भवतस्तत्त्वं भक्तिभावरसोद्धुरः ।
मुमूर्षवे च सप्ताहे व्याजहार तथा तथा ॥ १४९

श्रुतिकान्तापि श्रीमूर्तिसौन्दर्यरसलालसा ।
नासदासीन्नो सदासीदित्येवं गद्गदस्वरा ॥ १५०

मन्दाक्षवलिता किञ्चिन्नाचचक्षे स्फुटाक्षरम् ।
चतुरशक्तियुता सापि चतुरा न निरूपणे ॥ १५१

सनत्कुमारशिष्यस्स नारदो भक्तिदेशिकः ।
गायं गायं पर्यटति महतीं वादयन् सदा ॥ १५२

तस्माज्ज्ञातुं भवत्तत्त्वमक्षमोऽस्मि तदन्तिकात् ।
गजारूढकराच्चूर्णं ग्रहीतुं को नु शक्ष्यति ॥ १५३

त्वमेवातस्स्वकं तत्त्वं ब्रूहि तिष्ठ दयानिधे ।
भक्ष्यजालानि पानीयं दास्ये खाद पिबाच्युत ॥ १५४

इति पृष्टस्स भगवांस्तूष्णीमेव हसन् स्थितः ।
तदाहं तं समुद्दिश्य विनयेनेदमब्रवम् ॥ १५५

स्वीयं प्रभावं स्वयमेव वक्तुं न युक्तमित्यद्य वदन्नहो माम् ।
प्रतारयेः किं बहुशो ह्यवोचद्भवान् भवत्तत्त्वमये बहुभ्यः ॥ १५

यथा—

स्यान्नारदोऽहं यदि दिव्यरूपं प्रदर्श्य तत्त्वं कथयेस्स्वयं मे ।
अहं सुदामा यदि ते रहस्यं ब्रूयाः प्रभो मह्यमभेदबुद्ध्या ॥ १५
यद्यर्जुनोऽहं शृणु मे वचस्त्वं ब्रूयाः पुनः शृण्विति मह्यमीश ।
यद्युद्धवोऽहं तव पूर्णतत्त्वं ब्रूयाः पुनर्मह्यमतीव गूढम् ॥ १५
ते बान्धवा नारदपार्थमुख्याः कोऽहं परोऽगस्त्यसहोदराभः ।
दासानुदासेषु च तावकेषु संख्यातिगेष्वन्यतमो हि दीनः ॥ १५
गण्यो न ते मुण्डितमस्तकोऽहमुपेक्षसे मां न हि चेत्किमर्थम्
मां पाहि राधाधव बालकृष्ण ममापराधान् भगवन् क्षमस्व ॥
शृण्वद्य विज्ञप्तिमिमां मदीयां भक्तौघसंरक्षक बालकृष्ण ।
मा धाव राधाधव बालकृष्ण गृहाण भक्ष्याणि नमो नमस्ते ॥ १६

(इति सम्प्रार्थ्य) सोत्प्रासं—

भोभो माधव ! कुत्र धावसि विभो ? गच्छामि काञ्चीपुरीं
कौबेरीमभिधावता दिशमहो प्राप्या कथं सा त्वया ? ।
जाने मार्गमहं क्षमस्व भगवन् किं तत्र कार्यं विभो ?
नक्रग्रस्तगजावनाय भगवन् तत्पूर्वमासीत्किल ? ॥ १६

पुनरहम्—

स्वामिन्धावसि कुत्र ? वारणपुरीं किं तत्र ? रक्षाकृते
द्रौपद्याः क्षणतस्तदैव भवता निर्वर्तिता द्वापरे ।

स्वस्यप्रकाशनकृति नहिदोपहेतुः सर्वावभासकरवेरपि लोकदृष्ट्या।
तद्वत्स्वतत्वकथने नहिकोपिलोपो नास्तीशमे कथय तत्वमपिस्वकंते ॥
तथापि ॥

ज्ञानीपे किमु भारतादिकमरे (जाने तवानुग्रहात्) जाने प्रभो
क्षम्यताम् ॥ १६५

गद्यम्—तदानीमहमन्तिके धावन्तं भगवन्तं राधाकान्तं पुनरुच्चै-
राहूय ॥

स्वामिन् धावसि कुत्र ? भक्त बदरीं गच्छामि किं तत्र भोः ?
तत्राष्टाक्षरमन्त्रकोटिहवनं (नाम क्रतुं कुर्वते) कर्तुं यतन्ते क्रतुम्।
श्रद्धाभक्तिपुरस्सरं बुधवरा भक्ताश्च मे साधवः
प्राज्याज्यैर्बहुसंविधाननिपुणाः श्रीवैष्णवाग्रेसराः ॥ १६६

गद्यम्—स्वामिन्निदं रहस्यं शृणु (इति हस्तचालनं कृत्वा)

भुक्त्वा माधव याहि तत्क्रतुवरो भावी हि शुक्रेऽसिते
पञ्चम्यां विधुवासरे किमधुना भो धावसे माधव।
आह्वानं हि विना गतिः किमुचिता यज्ञेश ते वैष्णवा
आगच्छन्तु भवन्तमाह्वयितुमेवात्र स्थितं श्रद्धया ॥ १६७

गद्यम्—तदेतच्छ्रुत्वा किञ्चिदुत्स्मिते माधवे पुनरहं—

श्रीराधामधुराधरामृतरसास्वादाय किं धावसे
गोलोके विरहार्दितास्ति विरजेत्येवं प्रभो धावसे ।
किं सत्यापरिरम्भणं मनसि संस्मृत्य प्रभो धावसे
भुक्त्वा माधव याहि कार्यशतमप्युत्सृज्य भुक्तिर्वरा ॥ १६८

गद्यम्—स्वामिन्नयि नन्दनन्दन !

किमर्थमारोहसि नारिकेळं घासाय मासावरतर्णकस्य । वद
घासोऽस्ति ते तत्र करे किमेते द्वे नारिकेळेऽस्ति हि मेऽत्र वासः॥

इति स्वबाल्ये कृतवामचेष्टितं संस्मारयन्मां तु विमोहयिष्यसि ।
नाहं यशोदा न हि नन्दगोपको मां पाहि भक्ष्याणि गृहाण भुङ्क्ष्व भोः॥

गद्यम्—तदा धावन्तं हरिमुच्चैराह्वयन् । (हस्तावुद्धाल्य)

हृत्वा मदीयं हृदयं जवेन पलायसे भो नवनीतचोर ।
कस्याभियोगं सविधे करोमि जगत्प्रभौ कुर्वति चौर्यमेवम् ॥ १७१
माता विषं दास्यति चेत्सुताय यदि स्वपुत्रं विकरोति तातः ।
सर्वस्वहारी नृपतिर्यदि स्यात् का तत्र लोके परिदेवनाहो ॥ १७२

गद्यम्—इति मया प्रतिहतवचने कुपित इव सोच्छ्वासं त्वरिततरं धावमाने श्रीजनार्दने वेपमानस्सप्रश्रयं हरे पाहि पाहि । मतिहीनवचनानि क्षन्तव्यानि क्षान्तिसागरैर्भवद्भिरिति विनतिपूर्वकं स्तोतुं प्रवृत्तोऽस्मि ॥

यथा—

राधाकृष्णाच्युत मुरहरे पाहि मा याहि विष्णो
गोपीकान्तावसनहरणाव्याजकारुण्यसिन्धो !

मा धावस्व प्रगतजनताभीष्टकल्पाग तिष्ठ
स्वामिन्नेवं द्रुततरगतिर्नोचिता ते कृपालो ॥ १७३

अम्भोजसम्भवमुखाखिललेखवन्द्यं
गम्भीरनाभिकुहरोदितहेमगर्भम् ।
गर्भस्थमायिकचतुर्दशलोकजालं
प्रालम्बदिव्यवनमाल्यधरं भजे त्वाम् ॥ १७४

आविर्भावतिरोभावौ निग्रहानुग्रहौ तथा ।
सृष्टिः स्थितिश्च संहारो लीलामात्रं तव प्रभो ॥ १७५

मायायवनिकाच्छन्ने रङ्गे संसारनामनि ।
प्रधानभूमिकाधारिन् शैलूषोत्तम ते नमः ॥ १७६

वनमालाशोभितांग गोपबाल जनार्दन ।
राधापयोधराश्लेषविचक्षण नमोऽस्तु ते ॥ १७७

स्वतो दयासागरोऽपि किं दासं समुपेक्षसे ।
नायं समुचितः कालः किं दासानवितुं प्रभो ? ॥ १७८

धर्मावनाय भगवन् भवता कृता ये
मायाबलाज्झषमुखा विविधावताराः ।
अज्ञातवेदपरिशीलनमूढचित्ता
जातं भवन्तमिति ते प्रवदन्ति मन्दाः ॥ १७९

गोपालचन्द्र तव मूलमहस्स्वरूपं
ब्रह्मादयोऽपि न विदुः किमु मादृशोऽज्ञाः ।

ब्रह्मासि शाश्वतमनन्तमजं निरीहं
विश्वस्य कारणमसि त्वममोघशक्ते ॥ १८०

अव्यक्तमूलं सकलान्तरोऽसि नित्यप्रकाशोऽसि निरञ्जनोऽसि।
आद्यन्तशून्योऽसि च निर्गुणोऽसि निस्सङ्गरूपोऽसि च निर्ममोऽसि॥

प्रेमक्षौद्ररसावदिग्धचरणो गोपीहृदब्जान्तरे
त्वन्नामोच्चरतां सतामविरतं लग्नोऽसि वक्त्रान्तरे।
लग्नो मानसपञ्जरे हृदि सदा ध्यानावधानात्मनां
बद्धोऽप्येवमनेकधा मम पुरो मायाविबद्धावसे ॥ १८२

सृष्ट्वा भवांस्तत्तदनुप्रविश्याप्रविष्ट एवानुगतो विभाति।
हेमाङ्गदादिष्विव हे मुकुन्द किमिन्द्रजालं कुरुषे महात्मन् ॥ १८३

मरौ यथा नीरततिस्त्वयीशे विभाति लोकेश्वर जीवराशिः।
अवस्तुभूतोऽपि च वासुदेव किमिन्द्रजालं कुरुषे महात्मन् ॥१८४

एकोऽपि नानेव विभाति भास्वान् सरित्समुद्रादिजले यथावत्।
एकोऽपि नानेव विभासि सत्तात्वत्तात्मना स्फारतरो ह्यनन्तः ॥

सर्वेषु भूतेषु भवन्तमेव पश्यामि विश्वेश्वर विश्वमूर्ते।
त्वत्तोऽपि मां कृष्ण पृथङ् न वापृथक्किमिन्द्रजालं कुरुषे महात्मन् ॥

धावन्तमग्रेऽपि भवन्तमेव तिष्ठन्तमन्तर्मम सर्वतोऽपि।
पश्यामि विश्वेश्वर विश्वमूर्ते किमिन्द्रजालं कुरुषे महात्मन् ॥ १८७

हालाहलं पिबस्वेति त्वां निर्बन्धं करोमि किम्।
मधुराणि तु भक्ष्याणि भुङ्क्ष्वेति प्रार्थये हरे ॥ १८८

पणापेक्षास्ति ते स्वामिन्निक्षुभक्षणकर्मणः।

प्रणिपातप्रतीक्षापि ह्यपेक्षा चुबुकग्रहे ॥ १८९

अलौकिकी ते मर्यादा ह्यतिमानुषवर्त्मनः ।
दासमेनं न चेदेवं किमर्थं समुपेक्षसे ॥ १९०

सम्प्रेक्ष्याप्यनुधावन्तं श्रान्तं भक्ष्यभरादपि ।
तव बोधयितुं शक्तः कोन्वस्ति वसुधातले ॥ १९१

अनुगृह्णीष्व मा वा त्वं को नु शास्ता तवास्ति भोः ।
कर्तुं त्वमन्यथा कर्तुमकर्तुमपि चेश्वरः ॥ १९२

न्याय्यान्याय्यैर्बहुविधैर्गर्ह्यागर्ह्यैर्बहुश्रमात् ।
बहोः कालान्निपुणया युक्त्या या समुपार्जिता ॥ १९३

दासावने जागरूको भक्तवाञ्छाप्रपूरकः ।
अनाथरक्षकः कृष्णस्त्वापद्बान्धव इत्यपि ॥ १९४

कीर्तिरस्ति जगत्ख्याता किं कलङ्कयसेऽद्य ताम् ।
'सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते' ॥ १९५

इति गीतासु यत्प्रोक्तमर्जुनाय स्मराधुना ।
चिरार्जितमहाकीर्तिरक्षणे धीमता कश्चिन् ॥ १९६

नैव गण्यश्श्रम इति धीमन्तः प्रवदन्त्यतः ।
नात्र युद्धश्रमो नापि याच्ञा स्त्रीरूपधारणम् ॥ १९७

न तिर्यग्जातिजननश्रमो वा गूढवर्तनम् ।
सुखेन भुक्त्वा भक्ष्याणि कुरु कीर्तिं तवोर्जिताम् ॥ १९८

लोकज्ञं सर्ववेत्तारं ज्ञापये त्वां न शिक्षये ।
प्रणिपातं करोमीश क्षमस्व परमेश्वर ॥ १९९

प्रणिपातप्रतीकारा दासदोषाः प्रभोः किल ।
क्षन्तव्याएव भवता जगतीनाथ माधव ॥ २००

भक्तरक्षणकृते यदोः कुले गोजगत्स्थित हरे परात्पर ।
वारणाय वसुधाधुरस्त्वया जन्म नर्मविधया समाश्रितम् ॥ २०१

गद्यम् ॥ पुनरहमुच्चैराहूय । हस्तावास्फाल्य —

भो तिष्ठ भो निर्मल निर्विकार भो तिष्ठ भो निर्गुण बालकृष्ण ।
भो तिष्ठ भक्तान्तरपद्मभृङ्ग भो तिष्ठ गोपीजनपाल कृष्ण ॥ २०२

अनाथसंरक्षक तिष्ठ कृष्ण भक्तार्थनापूरक तिष्ठ कृष्ण ।
गृहाण भक्ष्याणिं मदर्पितानि मा धाव भो माधव तिष्ठ कृष्ण ॥

गद्यम्—इति सानुनयं सप्रश्रयं स्वमहिमावेदकरहस्यस्तोत्राणि मत्कृतानि शृण्वन्नपि मच्चित्तशोधनार्थमिव पुनरपि त्वरिततरं धावतस्तस्य दिव्यमङ्गळविग्रहात् संस्रस्तं महार्धं कौशेयवस्त्रं विलोक्य सन्तोषातिशयेन द्विगुणीकृतगमनवेगः पीताम्बरं हस्तद्वयेन गृहीत्वा शिरसि निधाय तद्दिव्यगन्धपरिमळविमोहितहृदयः कराभ्यां पुनर्गृहीत्वा विवृत्य ततो गळितं लेखासञ्चयं कक्षे निक्षिप्य पुनरास्फाल्य इतस्ततः परामृश्य सन्दृश्यमानसकलजगत्प्रतिबिम्बचित्रितं हिरण्यगर्भप्रमुखानिखिललेखानीकदुर्विज्ञेयामेयानिर्वचनीयमायास्थानीयं अद्रष्टकारङ्गनिर्मिति - चित्रलेखनप्रभृत्यघटनघटनाद्यनेकचित्रसन्निवेशतिर्यगायामाञ्चलाडम्बर - सहितं सकलशक्तिसङ्कलितं भगवतः पीताम्बरं विस्रंसनभिया मणिबन्धे दृढं वेष्टयित्वा 'माधव मा धाव । भो राधाधव मा धाव 'इत्युच्चै-

राहूय 'स्वामिन् गलितं ते पिताम्बरं नग्नोऽसि। असाम्प्रतमेवं धावनमिति सम्प्रार्थ्य पुनरपीत्थं स्तोतुं प्रवृत्तोऽस्मि स्मयसम्भ्रमसन्तोषसम्भृतः ॥

काञ्चीमण्डलकामकोटियतिराडास्थानविद्वत्कवेः
काञ्चीमण्डलकाकवाकनिलयश्रीकृष्णनाम्नो मम।
राधामाधवपादपद्मसततध्यानावधानार्थिनो
राधामाधवपृष्ठधावनकथाश्वासोऽयमाद्यो गुरो ॥ २०४

श्रीबालगोपालविलासनाम्नि चम्पूप्रबन्धे हरिभक्तिरम्ये।
पीताम्बरप्राप्तिसमाह्वयोऽयमाश्वास आद्यः परिपूर्ण आसीत् ॥ २०५

श्रीदक्षिणामूर्तिगुरुस्वरूप गृहाण भक्त्याद्य मयार्पितां त्वम्।
पूतां स्वतः श्रीहरिनामयोगात्पुनश्च पूतां कुरु साधुवादैः ॥ २०६

गुणो यदि स्यादिह हर्षणीयो दोषो यदि स्यादपि मर्षणीयः।
मत्वा स्वकीयार्भकजल्पितानि हृष्यन्तु सन्तोऽन्यगुणैकलुब्धाः ॥

गच्छतः स्खलनं न्याय्यमिति लोके प्रथास्त्यहो।
धावतः किमु वक्तव्यं ग्रन्थेऽस्मिन् स्खलितागमे ॥ २०८

पृष्ठतो बालगोपाल (भगवद्बाल) श्रीकृष्णब्रह्मणो हरेः।
धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥ २०९

इति चैकादशस्कन्धश्रीमुखोक्त्यनुसारिणः।
धावतो भक्तिमार्गे मे न भीः खेदो न च क्षतिः ॥ २१०

इति श्रीमदुमारमणकरुणासमासादितानवद्यहृद्यमृदुपद्यकविता-भूषणस्य श्रीनन्दनन्दनपदारविन्दभजनानन्दतुन्दिलहृदयस्य वरिवस्यापरितोषितसाधुबृन्दस्य काञ्चीकामकोटियतिराडास्थानविद्वन्मण्डलीकिङ्करस्य काञ्चीमण्डलमण्डनायमानकाकवाकाग्रहाराभिजनस्य पञ्चद्राविडान्तर्विभागभूतान्ध्रभूसुरवंशसंजातस्य वेगिनाडुसंज्ञकान्तरशाखाभिहितस्य स्मार्ताचारसम्प्रदायवर्तनस्य आत्रेयगोत्रसम्भूतस्य श्रीवेङ्कटकृष्णश्रौतिसुब्बलक्ष्म्यम्बापुत्रस्य सौजन्यसौशील्यगुणमणिभूषिताया जानकीनाम्न्यास्सीमन्तिन्याः प्रियभर्तुः श्रीकृष्णाभिधानस्य कवेः कृतिषु भगवदनुधावनाभिधाने विचित्रकथासंविधाने प्रबन्धे पीताम्बरलाभो नाम प्रथमाश्वासः ॥

प्रथमाश्वासः समाप्तः ॥

श्रीराधानाथः पायात्

# ॥ अथ द्वितीयाश्वासः ॥



काञ्चीस्थकामकोटीपीठपते धर्मरक्षणोद्योगिन् ।
आश्वासं हरिचरिते शृणु भोः स्वामिन्द्वितीयमथ महितम् ॥ १

काञ्चीमहाक्षेत्रविराजमानश्रीकामकोटीश्वर देशिकेन्द्र ।
दृग्दीक्षया पावनशक्तिमत्या स्वशिष्यकालुष्यनिराकरिष्णो ॥ २

श्रीराधिकानाथपथानुधावना-
भिधानसंशोभितचित्र सत्कृतौ ।
शृणवद्य पीताम्बरशक्तिवैभवप्रख्यापकाश्वासमिमं जगद्गुरो ॥ ३

यथा—

गद्यम्—तदानीमहं हस्तसम्भृतहारिद्रवसनाबद्धभक्ष्यभोज्य - लेह्यचोष्यवस्तुसम्भृतपात्रः शिरोविधृतत्रिविधपानीयपात्रः पृष्ठलम्बि-सुगन्धतैलकाचपात्रः कराङ्गुलीविधृतपुष्पपुटिकः कक्षस्कन्धविधृतनाना-विधफलभारः कटिवेष्टनवसनान्तरितसुवासनावासितवीटिकावस्तुसम्भा-रपरिपूर्णकरपेटिकः किञ्चित्स्मयमानवक्त्रो विस्मयमाननेत्रः कम्पितगात्रः किञ्चित्कुञ्चितकन्धरः पाणिग्राह्यादूरसञ्चरिष्णुं वेणुवेत्रविषाणोच्चलगुड-तं प्रशस्तबालगोपालवेषमशेषकारणमादिपूरुषं विस्रस्तपीताम्बरं दिग-म्बरं कनत्कनककुण्डलहारकेयूरकिरीटाङ्गदज्वलन्मणिनूपुरग्रैवेयकादिना -नाविधभूषणभूषिताङ्गमुज्ज्वलशोभावन्तं भगवन्तं श्रीराधाकान्तमुपगत्य तोतुं प्रवृत्तोऽस्मि ॥

यथा—

गोलोकादवतारितोऽसि भगवन् पुण्यैर्महद्भिर्मम
प्रेमानन्दमयोऽसि भक्तिसुलभो निर्व्याजकारुण्यभूः ।
स्वामिन् दासजनस्य रक्षणकृते लीलावशेनाधुना
भक्तानुग्रहसाग्रहेण भवता स्वात्मा ममाविष्कृतः ॥ ४

ज्ञातो भवान् पूर्णतमावतारो गोलोकवासी भगवान् मुरारिः ।
गूढं परं ब्रह्म मनुष्यलिङ्गमुद्धारणार्थं भजतां जनानाम् ॥ ५

वैकुण्ठलोकावसथो रमाया नाथो भवान् राक्षसलोकहन्ता ।
क्षीरोदशायी कमलाधवस्त्वं नारायणाख्योऽसि च देवदेवः ॥ ६

स्वाभिन्नमायाभिधशक्तियुक्तो ब्रह्मा शिवो विष्णुरपि त्वमेव ।
त्वमेव जीवेश्वरलोकरूपस्त्वमेव सर्वं सदसत्परं च ॥ ७

त्वमसि शङ्करदेशिकदेशिताद्वयविनिर्मलकेवलचिद्वपुः ।
त्वमसि लक्ष्मणमौनिनिरूपिताप्रकृतिसिद्धसुदिव्यगुणोज्ज्वलः ॥ ८

त्वमसि गौरतनुप्रभुबोधितप्रविमलाचलभक्तिसुधामयः ।
त्वमसि भक्तमनोरथसिद्धये विधृतमूर्तिरपि ह्यतनुस्स्वतः ॥ ९

काश्मीरशैवागमसम्प्रदायसप्रत्यभिज्ञानसुख स्वरूपः ।
त्वं तत्क्रतुन्यायसुसिद्धसर्वतन्त्रोक्तसर्वाकृतिरप्यमूर्तः ॥ १०

किं बहुना—

भेदाभेदनिरस्तभेदसहिताभेदाप्रभेदान्विता-
भेदानन्तदुरन्तवादनिरतालभ्यात्मदिव्याकृते ।

भक्तस्वान्ततटाकभावलहरीडोलामरा ( ळाकृते ) ळप्रभो
सम्यक्सम्भृतभक्तिभावरसिकाधीनस्थिते पाहि माम् ॥ १२

त्वमेव काळिङ्गिनदीतटस्थमन्नारुपोरू (ळ्) रुमहास्थलस्थः ।
मामेवमुद्धर्तुमिह प्रवृत्तो मन्नारिकृष्णाभिधगोपबालः ॥ १३

त्वं वेङ्कटेशो ह्यहिशैलवासी काञ्चीस्थहस्त्यद्रिनिवासिदेवः ।
त्वं श्रीजगन्नाथसमाख्यदेवस्त्वं रङ्गधामाधिपतिश्च कृष्ण ॥ १४

आलोकयेदं कमलापते त्वं पीताम्बरं ते मम हस्तलग्नम् ।
अनेन हीनो नहि शोभसे त्वं चिदम्बरस्थोऽपि दिगम्बरोऽद्य ॥१५

यत्तिर्यगञ्चलं पञ्चब्रह्ममुद्राभिरञ्जितम् ।
यदायामाञ्चलं पाञ्चजन्याद्यैरभिमुद्रितम् ॥ १६

यत्सत्यशिववैकुण्ठलोकरूपाभिरञ्जितम् ।
यदन्तरालं सकलजगच्चित्राभिरञ्जितम् ॥ १७

यन्महार्घै रत्नचयैर्वज्रस्यूतैरलङ्कृतम् ।
यदिन्द्रधनुवच्चित्रवर्णैर्दर्शनशोभनम ॥ १८

यत्सन्दर्शनमात्रेण गोप्यो गावो मृगा नगाः ।
हृष्यन्त्यनन्यमनसस्तत्ते पीताम्बरं हरे ॥ १९

मम हस्तगतं तस्मान्मम हस्तगतो भवान् ।
विरम्य धावनात्कृष्ण सत्वरं भोक्ष्यसे यदि ॥ २०

पीताम्बरं प्रयच्छामि नो चेद्धृत्वा व्रजाम्यहम् ।
स्वामिन् कुत्रापि वा गन्तुं नार्हसि त्वं दिगम्बरः ॥ २१

स्वार्थसाधनरत्यापि परसंरक्षणं भवेत् ।
दीनरक्षणदीक्षोऽसि भुङ्क्ष्व गोविन्द माधव ॥ २२

(इति मदभ्यर्थनां श्रुत्वा)

गद्यम्—मत्करतलगतस्वकीयपीताम्बरग्रहणाकाङ्क्षया मन्दीकृतधावनं माधवमभिवीक्ष्य पीताम्बराञ्चलं हस्तेनोद्धृत्य तस्मै प्रदर्शयन् ॥

गोपीकरात्तदधिभाण्डकरीषधूमश्यामाङ्कसंयुतमिदं तव पीतवासः ।
सूर्यात्मजातटसमुत्थितवृक्षषण्डनिर्यासरञ्जितमिदं तव पीतवासः ॥
कण्डूयनावसरगोगणवक्त्रनिर्यत्फेनाञ्चिताञ्चलमिदं तव पीतवासः ।
शाखावलीमुखसमप्लुतिकेलित्रुट्यत् (भिन्न) सर्वाञ्चलं तव विलोकय पीतवासः ॥ २४

कुञ्जप्रलीनपशुपालकदारिकाग्रहस्ताभिकृष्टिशिथिलं तव पीतवासः ।
सायन्तनावसरगोखुरधूळिसङ्ग किम्मीरवर्णमवलोकय पीतवासः ॥

यन्त्रस्थतक्रदधिदुग्धघृतादिभाण्डभङ्गाभिषेकमसृणं तव पीतवासः ।
यन्त्रावरोपितपयोघटभङ्गरावोद्बुद्धाभिकर्तितदशं तव पीतवासः ॥
राधापयोधरतटीपरिरम्भलग्न हारिद्रमुद्रितमिदं तव पीतवासः ।
श्रीरुक्मिणीघनकुचद्वितयान्तराळ काश्मीरपङ्किलमिदं तव पीतवासः॥

सत्याविलोलनयनाञ्जननीरपूर क्लिन्नाञ्चलान्तरमिदं तव पीतवासः ।
भद्रावधूमुखसरोज सुगन्धिवीटीरागारुणाङ्कितमिदं तव पीतवासः ॥

गद्यम्—स्वामिन् गोपाल तदेव विवृत्य दर्शयिष्यामि पश्य पश्य । इत्युच्चैराहूय ॥

नानावतारसमयाचरितेतिवृत्तसंस्फोरकाङ्कनसमञ्चितचित्रयुक्तम् ।
आवेशिताभिमतवाञ्छितकारणार्थस्वोद्भूतपुण्यतलरूपविराजितं च ॥
गोभूजगद्व्रजतलाभिविराजितानां रूपाभिरञ्जितमिदं तव सुन्दरीणाम् ।
बृन्दावनाचरितगमनविलासगोष्ठीप्रत्यक्षदर्शननिरूपकचित्रयुक्तम् ॥
अक्रूरदृष्टरथयामुननीरमध्यराजन्महाद्भुतमुरूपविराजितं च ।
वत्सापहर्तृकमलोद्भवधर्षणात्तसम्पूर्णशक्तिमहितोज्ज्वलरूपचित्रम् ॥
मृद्भक्षितेति परितर्जयितृस्वधात्र्यै
व्यात्ताननान्तरविराजितलोकचित्रम् ।
कंसस्य संसदि समागतसर्वचित्त-
काङ्क्षानुकूलसुविभासि (परिवर्ति)त रूपचित्रम् ॥ ३२
सान्धियत्नसमये सहदेवचित्तसम्बद्धपूर्णमहिमान्वितरूपचित्रम् ।
दुर्योधनादिकृतबन्धनयत्नजातक्रोधोग्रदुर्विषहरूपविराजितं च ॥ ३३
हिंसार्थभीतिविमुखार्जुनचित्ततुष्ट्यै सन्दर्शिताद्भुतसुरूपविराजितं च ।
त्वद्रूपवैभवगुणोत्करसर्वसारं पीताम्बरं तव विभो मम हस्तलग्नम् ॥३४
पश्येति सोत्प्रासमयेति सम्भ्रमादाहूय देवं पुनरेवमब्रवम् ।
गोविन्द दामोदर गोपवेष भोः भक्तानुकम्पाधृतमर्त्यवेष भोः ॥ ३५
प्रायो मदीयहृदये परिलग्न एव भक्त्या पुरा मम भवानधुना तु युक्त्या ।
मद्धस्तगोऽसि वसनच्युतिकारणेन गोपाङ्गनावसनचोर कुतोऽद्य यासि ॥

(इत्यङ्गुल्या निर्दिश्य)

भो कृष्ण सिष्णासुविमुग्धबाला चेलापहर्तुर्हि दिगम्बरत्वम् ।
फलं तवाहो परमेश्वरस्याप्यलङ्घनीया नियतिः स्वकीया । ३७

अत्युत्कटैः पुण्यचयैश्च पापैरिहैव भुङ्क्ते फलमेष धर्मः ।
हरिर्हरो वा न हि कर्मरीतिमुल्लङ्घितुं वाञ्छति लोकहेतोः ॥ ३८

गद्यम्—इति वदति मयि ॥ सहासं कृष्णः पुनः प्राह—

श्रुत्वा पौलस्त्यवाक्यं कनकमृगवपुर्धारिणा यत्त्वयारे
पूर्वं रामावतारे मदुटजनिकटे भ्राम्यता लीलयैव ।
तेऽपश्चाद्धावतो मे बहुविधकपटा मन्तवो ये कृतास्तान्
पृष्ठे मे धावमानोऽनुभव निजकृताघानुरूपानिदानीम् ॥३९

किंच—

किं वा न जानासि मम प्रभावं प्रतारये त्वां शृणु मेऽद्य शक्तिम् ।
पुरा मया वत्सपवत्सरूप धर्त्रा च तन्मातृमनोऽनुकूलम् ॥ ४०
तत्तादृशैश्चेष्टितकैश्चरित्वा प्रतारितोऽभूत्किल पद्मयोनिः ।
तत्तादृगानन्त्यविचित्रशक्त्या प्रतारये त्वामिति चाबभाषे ॥ ४१
निशम्य वाक्यं विनयान्वितस्सन्नवोचमेवं हरिसन्निधाने ।
हरे मुरारे तव सर्वशक्तिस्तत्प्रत्नपीताम्बरधारणोत्था ॥ ४२
स्वाभिन्नमायाभिधशक्तिरूप त्वत्प्रत्नपीताम्बरदिव्यशक्तिम् ।
जानामि तद्धारणहेतुनैव ह्यनन्तशक्त्युज्ज्वलितः पुरा त्वम् ॥ ४३
त्वया हि पीताम्बरधारिणा सता प्रतारितः पद्मभवो महानपि ।
तत्तादृगानन्त्यमहत्त्वसंयुतं पीताम्बरं ते मम हस्तसङ्गतम् ॥ ४४
तुषां विना भूजलसङ्गमात्रतो न तण्डुलो रोहति पुष्कलो यथा ।
तथैव पीताम्बरविच्युतो भवान् षाड्गुण्यहीनोऽभवदद्य केवलः ॥
त्वां स्रस्तपीताम्बरमस्तशक्तिं प्रतारयेयं(ऽहं) च मनुष्यमात्रः ।

तथाविधानन्तविचित्रशक्तिस्तत्प्रत्नपीताम्बरविच्युतस्त्वम् ॥ ४६

यन्निर्गुणं निष्प्रतियोगिकं च ब्रह्माभवः केवलमद्वितीयम् ।
तत्प्रत्नपीताम्बरधारणेन भूयाः पुनस्त्वं परिपूर्णशक्तिः ॥ ४७

भक्ष्याणि भुङ्क्ष्व मधुराणि पिबाद्य कृष्ण
पेयान्युशीरमुखवस्तुसुवासितानि ।
दास्ये तवैव परिधानमनेन हीन-
स्त्वं केवलो भवसि निर्गुण एव कृष्ण ॥ ४८

श्रुत्वा ममैतद्वचनं स कृष्णः प्राहैवमुच्चैः प्रहसंस्तदानीम् ।
हृत्वा पथि त्वं वसनं महार्घं चोरोऽपि लज्जाभयवर्जितः सन् ॥

दास्ये गृहाणेतिवदान्यवन्मद्वासः पुनर्जल्पसि मत्पुरस्तात् ।
उत्कृत्य पृष्ठं तु गुडात्मकस्य विनायकस्यैव गुडं तदेव ॥ ५०

निवेदयेत्कश्चन लोभहेतोस्तादृग्विधं ते वचनं विभाति ।
सर्वां तवैतां महतीमनीतिं प्रख्यापयाम्यद्य महाजनाग्रे ॥ ५१

इति वादिनि देवेशे केशवे प्रहसन्मुखे ।
नत्वा स्तुत्वा च सोत्प्रासं प्रहसन्नेवमब्रवम् ॥ ५२

यथा-

अस्वामिकं राजपथे विसृष्टं यदृच्छया लब्धमयाचितं च ।
पुराभवोपात्ततपस्समाधिदानव्रतेज्यादिफलस्वरूपम् ॥ ५३

दैवोपसृष्टं वसनं पुरातनं गृह्णन्न चोरो न च वञ्चकोऽप्यहम् ।
स्वामिन् अयि गोपाल —
दृढार्गळाबद्धगृहान्तरस्थितं पयो न नो वा नवनीकखण्डकम् ॥ ५४

सिष्णासुबालाजनचोलसञ्चयो न पारिजातो न बलादुपाहृतः ।
पुरोपकण्ठस्थसुवासिनीवृता कन्या न चेयं हि विवाहसम्भ्रमा ॥५५
न तुल्यकष्टार्जितदेवदानवाविभक्तपीयूषघटः करेऽर्पितः ।
प्राग्ज्योतिषाधीश्वरमूढभौमावरोधरुद्धो न वधूगणोऽयम् ॥ ५६
यद्वाथ तद्वा भवतु प्रदास्ये गृहाण भक्ष्याणि महार्घवस्त्रम् ।
तद्धारणात्प्राप्तसमस्तशक्तिर्भूयाः पुनस्त्वं भगवान् स कृष्णः ॥ ५७

इमां मदीयां विज्ञप्तिं सावधानमनाः शृणु ।
यथा वा रोचते चित्तेऽच्युत पीताम्बराचर ॥ ५८
शब्दप्रमाणं श्रेष्ठं स्यादर्थनिर्णयकर्मणि ।
पीताम्बरोऽच्युतश्शार्ङ्गी नामलिङ्गानुशासनात् ॥ ५९
शुकशास्त्रे भागवते पीतवासा जगत्पतिः ।
पीताम्बरधरः स्रग्वी भारते व्यासनिर्मिते ॥ ६०
पीताम्बरधरत्वं ते स्वामिन् योगेन संयुतम् ।
लोके सर्वत्र सर्वेषां नाम ते विदितं नृणाम् ॥ ६१
त्वदभिज्ञानकरणतादृक्पीताम्बरं विभो ।
मम हस्तगतं तस्मात्पीताम्बराविवर्जितम् ॥ ६२
शब्दप्रमाणावलम्बा दृष्ट्वा त्वां चिह्नलोपतः ।
च्युतपीताम्बरं नूनं योगेन परिवर्जितम् ॥ ६३
ज्ञातपूर्वमपि स्वान्ते न निश्चिन्वन्ति संशयात् ।
अहंनु भोः कृष्ण इति त्वदुक्तिमपि वा जनाः ॥ ६४
न विश्वसन्ति मिथ्येति पीताम्बराविहानतः ।

अन्वर्थं कुरु ते नाम पीताम्बरपरिग्रहात् ॥ ६५

नो चेद्धृत्वा व्रजामीश त्वं धावस्व दिगम्बरः ।

न मे दोषोऽस्ति भगवन् यथार्थं कथयामि ते ॥ ६६

तदा—

श्रुत्वा (क्रुधेव) मदुक्तिं प्रविकम्पिताधरो

मूर्धानमुच्चाल्य स राधिकाधवः ।

प्राहैवमुच्चैर्विनिवृत्तधावनो

विवृत्तनेत्रः परिवृत्तकन्धरः ॥ ६७

यथा-

पीताम्बरं तिष्ठतु ते करे मे किं वा त्वयात्तं किमु मे विनष्टम् ।

खे द्योतनादेव तु कीटमात्रं प्रभाकरत्वं किमुयाति लोके ॥ ६८

गद्यम्—इति तूष्णीं स्थितं क्रुद्धं राधाधवं प्रसादयितुं बद्धाञ्जलिः प्रदक्षिणीकृत्य मार्गमवरुध्य ॥

शिष्टाशिष्टजनानां रक्षाशिक्षाविचक्षणोद्योगिन् ।

अक्षमया यद्रूक्षं ह्यप्राक्षं तत्क्षमस्व रक्षोहन् ॥ ६९

कर्णावतंसीकृतकर्णिकार! भवार्णवोत्तारणकर्णधार! ।

कृष्णापदुद्धारक! रक्ष रक्ष क्षमस्व मां कृष्ण कृतापराधम् ॥ ७०

स्वामिन् ब्रह्मादिकसुरशिरोरत्ननीराजिताङ्घ्रे

योगिध्येयामलनिरुपमामेयदिव्याकृते भोः ।

श्रीमद्राधादिकवरवधूबृन्दसंश्लिष्टमूर्ते

मूर्तामूर्ताखिलजगदधिष्ठानमूर्ते नमस्ते ॥ ७१

भक्तोऽहं त्विति चिन्तयन्हृदि मया तेऽनुद्रुतिं कुर्वता
वाचा शब्दचमत्कृतिस्वरसया ये वा कृता लीलया ।
त्वत्सन्दर्शनहर्षतः परिचयाधिक्यात्प्रमादादपि
क्षन्तव्या मम मन्तवस्सहजकारुण्यामृताब्धे हरे ॥ ७२

पद्मालयाप्रिय हरे परवासुदेव सर्वज्ञ भक्तवरदाभयदानदक्ष ।
श्रीराधिकेश मधुसूदन पुष्कराक्ष रक्षाद्य मां कलितदोषमपि क्षमस्व॥
प्रह्लादनारदमुखाखिलभक्तजालध्येयस्वरूप निरुपाधिकचित्स्वरूप ।
राधावधूप्रिय जनार्दन पद्मनाभ रक्षाद्य मां कलितदोषमपि क्षमस्व॥
अलं क्रुधा भो भगवन् शृणु त्वं सर्वार्थहानिर्भविता (क्रमात्ते)यथा ते।
लाभो महान्मेऽस्ति च सद्य एव पीताम्बरोऽहं च भवामि कृष्णः॥
तेनाद्य मायी च भवामि पूर्वं यच्चक्रधारी च दशावतारी ।

गद्यम्—(पीताम्बरधारणान्मायी भवामि । पुनः पुनर्मयैव जनन मरणाभ्यां संसारचक्रं ध्रियते किल । अतोऽहं पूर्वमेव चक्रधारी दशासु बाल्यादिषु जाग्रदादिषु अवतरणशीलत्वान्मम दशावतारित्व पूर्वसिद्धमेव) ॥

धृतेन सारूप्यफलं मम स्याद्विरूपता तेऽधिगता वृथैव ॥ ७
विरूपभावात्तव कष्टनष्टे शृणुष्व वक्ष्ये भव जागरूकः ।
रुन्धन्त्यभिज्ञानमहार्घवस्त्राभावाद्भवन्तं भवतो नियुक्ताः ॥ ७
तद्दुर्लभस्स्याद्भगवंस्तवैव त्वदीयसौधान्तरसम्प्रवेशः ।
सारूप्यभाजो निवसन्ति यत्र पीताम्बराश्चक्रगदादि(युक्ताः) भूषाः
यथाकथञ्चिद्भुवनप्रवेशः स्याच्चेत्तवान्तः पुरसम्प्रवेशः ।
हरे यथापूर्वमहो न च स्याद्वस्त्रेऽस्ति तादृङ्महिमाधुना प्रभो ॥ ७

गृहाण भक्ष्याण्यधुनैव दास्ये पीताम्बरं प्रत्नमिदं त्वदीयम् ।
त्वं प्रत्नपीताम्बरधारणेन गोलोकवासी भगवाननन्तः ॥ ८०
गूढं परं ब्रह्म मनुष्यलिङ्गं कृष्णो भवेः पूर्णतमावतारः ।
"अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम्" ॥

किञ्च —

तैलेन ते केशव केशपाशं परिष्करिष्ये बहुवासितेन ।
सुकेतकीपाटलिजातिपुष्पैर्घनसारसारैः ॥ ८२
हेमाब्जसंवासितगाङ्गतोयैर्हेमोत्पलावासितयामुनैर्वा ।
विनिर्मलैश्शीतलवारिपूरैस्सुवासितैस्त्वां स्नपयामि देव ॥ ८३
करे स्थिते कीचकसम्पुटेऽस्मिन् रम्भाकपित्थाम्रफलानि सन्ति ।
विलोकयास्यां करपात्रिकायां हैयङ्गवीनाज्यपयोदधीनि ॥ ८४
विलोकयास्यां करभक्रिकायां शुद्धाज्यपक्वानि च मोदकानि ।
आमोदयुक्तानि कदुष्णवन्ति लेह्यानि चोष्याणि बहूनि सन्ति ॥ ८५
अस्यां हि तालीदलपेटिकायां खर्जूरजम्बूलिकुचानि सन्ति ।
मधूनि सन्तीह मधूकनामफलानि विष्णो लिकुचानि पश्य ॥ ८६
किं पूतनावत्किमु चेदिभूपवद्द्वेष्मि किं ते समुपेक्षसे कुतः ।
मदर्थनां सार्थय पार्थसारथे गृहाण भक्ष्याणि यथेप्सितानि ते ॥ ८७
भक्त्यातियत्नेन समार्जितानि भक्ष्याणि भोज्यानि विलोकय त्वम् ।

(इति मधुलिकुचानि करे गृहीत्वा प्रदर्शयन्)

स्वनिष्कुटस्थद्रुपचेलिमानि द्राक्षाम्रमोचालिकुचादिकानि ॥ ८८
गृहाण मत्वाद्य फलानि भक्त्या यथा शबर्या समुपार्जितानि ।

भक्त्या त्वदर्थं ह्यधुनैव कृष्ण कदुष्णयुक्ता घृतपाचिताश्च ॥ ८९
मरीचिचूर्णार्द्रकयुक्तमाषापूपा इमे माधव संगृहीताः ।
कुचेलचेलग्रथिताश्च धानाः पुरा यथा माधव संगृहाण ॥ ९०
हिङ्गुमरीचीतिलचूर्णतैलसुसंस्कृतं साम्लरसं सुभक्तम् ।
हिङ्गुमरीच्यार्द्रकखण्डयुक्तं दध्यौदनं सर्षपसंस्कृतं च ॥ ९१
धात्रीजनप्रेषितबालनीतं जलौदनं शिक्यधृतं यथा वा ।
शुद्धाज्यसोपस्कृतशाकसूपभोज्योष्णशुद्धान्नचयस्त्विदानीम् ॥ ९२
पाञ्चालपुत्र्या विपिनान्तराळे हस्तार्पितं शाकमथेति मत्वा ।
अतः शबर्यादिसमर्पितैस्त्वं तुल्यानि मत्वा कृपया गृहाण ॥ ९३
पत्रं फलं तोयमपीह कृष्ण भक्त्यार्पितं ते ह्यमृतेन तुल्यम् ।
खिद्ये त्वयीशे न दृढेति भक्तिर्यतो न गृह्णाति भवान्मदीयान् ॥ ९४
अजस्रनामस्मरणाभिघारपूतान्विधास्येऽच्युत सङ्गृहाण ।
साधुप्रशंसामहितान् करोमि तथापि वा स्वीकुरु बालकृष्ण ॥ ९५
भवान् हि निष्कारणजायमानकटाक्षपातेन पुनाति भक्तान् ।
अतो गृहाणार्जुनमित्र कृष्ण भक्ष्याणि भोज्यानि मदर्पितानि ॥ ९६

गद्यम्—तदा धीशोधनार्थमिव कदध्वना धावन्तं राधाकान्तमुद्दिश्य अहो स्वामिन्नित्युच्चैराहूय ॥

अर्कांशुसन्दीपितवालुकालवैरयं हि मार्गस्सुतरां च दुर्गमः ।
नानेन धावस्व सहानुधावने कथं समर्थोऽनुगृहाण मामये ॥ ९७
सूच्यग्रनामकतृणैरतिसङ्कटोऽयं मार्गस्तु नव्यकुशकण्टकसंयुतश्च ।
व्याघ्रादिवन्यमृगवासभयङ्करश्च भेतालभूतकटुरावविमोहकश्च ॥ ९८

*किंचापिवृश्चिकविषोरगचोरबाधाभीतिप्रदो न हि पथा व्रज तेन कृष्ण ।
ग्रीष्मोल्बणातपवलाद्द्रवता †खनीजपङ्केन सङ्कटयुगेषहि राजमार्गः ॥
कार्बम्सुलारीमुखनूत्नयानैर्गतागतैस्सङ्कुल एष मार्गः ।
न भक्ष्यभारोद्वहनातिभुग्नस्त्वत्पृष्ठतो गन्तुमहं समर्थः । १००
सहस्रपादान्वितपूरुषेण च त्वया द्विपादेन मया जवेन यन् ।
सामान्यमर्त्येन सहानुधावनं साध्यं कथं स्याद्वद भो त्रिविक्रम ॥
क्व वैनतेयानुगतिस्सुसाध्या पतत्रिणां काकबकादिकानाम् ।
अतो विसृष्टानुगतिर्निराशस्तपश्चरिष्ये समयप्रतीक्षः ॥ १०२

गद्यम्—इति दीर्घं निःश्वस्य भूमावुपविश्य बद्धाञ्जलिः ॥
स्वामिन् दूरान्न गन्तव्यं दुर्गमे काननान्तरे ।
न जाने विपि(नेऽ)नाध्वानं जवाद्याते त्वयीश्वर ॥ १०३
कण्टकैरावृते मार्गे न धार्ये पदपङ्कजे ।
त्वरितं न हि धावस्व प्रस्तरैर्विषमे पथि ॥ १०४
न वृक्षमूले स्थातव्यमुरगास्सन्ति गूहिताः ।
नातपे पथि गन्तव्यं सैकते तव गुप्ततः ॥ १०५
नानुधावामि गोविन्द स्थातव्यं ते शुभे स्थले ।

---

* किंचापीति विषकीटविशेषः विविधभेदश्च स भवति । बहुधा भिन्नस्य तस्य शरीरसंस्पर्शमात्रेण उच्छूनता - पामादिरोगविशेषास्समुत्पद्यन्ते - तस्य नाम च शालन्दी - पाकुट्टपुरुगु इत्यादिभिः श्रूयते । तज्जन्यरोगबाधाः विविधमन्त्रौषधिजालैः वारयन्ति च तज्ज्ञाः ।

† रथ्यासंस्करणायोपयुज्यमानः (तार्) पङ्कद्रवविशेषः ।

यत्र कुत्रापि वा स्थाने तिष्ठ त्वं गतसम्भ्रमः ॥ १०६

गद्यम्—इति वृक्षाधःस्थले समुपविश्य । श्रान्त्या सुदीर्घं निःश्वस्य ॥

प्रह्लादसंरक्षक पाहि विष्णो मा धाव भो माधव बालकृष्ण ।
गजेन्द्रसंरक्षक पाहि विष्णो मा धाव भो माधव बालकृष्ण ॥

कृष्णापदुद्धारक पाहि विष्णो मा धाव भो माधव बालकृष्ण ।
वैराटिगर्भावन पाहि विष्णो मा धाव भो माधव बालकृष्ण ॥

इति स्तुवन् दीनतरं समाह्वयन् सम्प्रार्थ्यमानोऽपि मयातिभक्तितः ।
शृण्वन्नशृण्वन्निव मामिकां स्तुतिं यदा प्रदुद्राव मुदा रमाधिपः ॥

वक्रोक्तिमाश्रित्य हसंस्तदा पुनर्व्याजस्तुतिं कर्तुमहं यतोऽभवम् ।
अयं मदीयं हृदयं जहार भोः पुरापि कृष्णो नवनीतलुण्ठकः ॥

वस्त्रापहारी ( किलबालिकानां ) वनिताजनानां
कन्यापहारी च सुरद्रुहारी ।

गृह्णीध्वमेनं पथि धावमानं दीनं जना मां परिपान्तु सन्तः ॥ १११

इति—

गद्यम्—अये मायामाणवक इति द्विरुच्चैराहूय हस्तावास्फाल्य । पुनरुच्चैरुद्घोष्य ॥

नन्दादिभ्यस्तव तु चरितं सर्वमावेदयिष्ये
तन्त्रीद्वारा ऋषिपरिषदि ख्यापयामीशवृत्तम् ।

व्यासादिभ्यस्तव तु चरितं केचिल्लुप्तं करिष्ये
गोलोकस्थान्प्रति तव कृतं त्राडुकाम्टुं करिष्ये ॥ ११२

एवं ब्रुवन् भक्ष्यभगतिखिन्नस्सर्वाणि पात्राण्यवरोप्य भूमौ ।
मुहूर्तमात्रं नयने निमील्य निध्याय कृष्णं प्रहसन्मुखस्सन् ॥ ११३

ते ख्यापयामीश्वर वामवृत्तमान्ध्रप्रभायां मुखपत्रचित्र ।
ते ख्यापयामीश्वर वामवृत्तमान्ध्राभिधायामपि पत्रिकायाम् ॥ ११४

प्रख्याप्यते वैदिकधर्मबोधिन्याख्यायुतायामपि पत्रिकायां ।
या सोमदेवाख्यबुधप्रवेकवाग्वज्रगुप्ता श्रुतिधर्मगोप्त्री ॥ ११५

प्रख्याप्यतेतेकिल वामवृत्तं श्रीदिव्यवाण्याह्वय पत्रिकायां ।
यस्याधिनेता कविसार्वभौमो(ह्य)ग्यप्पय्यशास्त्री हरिभक्तवर्यः ॥

ते ख्यापयामीश्वर वामवृत्तं त्रिलिङ्गनाम्नि (म्ना) प्रथिते च पत्रे ।
यस्याधिनेता तव मार्गणे मे साह्यं विदध्यात्स्वयमेव कृष्ण ॥ ११७

यो ह्यप्रियं पथ्यमतीव सत्यं निर्भीतिचेताः प्रकटीकरोति ।
यो गोमुखव्याघ्रकुपालकौघनिगूढदौष्ट्यप्रविवेकदक्षः ॥ ११८

स भूतपूर्वद्राविडस्सदान्ध्रो ऋजुस्वभावो मृदुसत्यभाषी ।
पाश्चात्यविज्ञानयुतोऽपि रूढप्राचीनविज्ञानसदन्तरङ्गः ॥ ११९

प्रख्यापयामीश्वर वामवृत्तं सजाम्बवान्वामनवृत्तवत्ते ।
सर्वत्रसर्वेश्वर सर्वथापि जानं तु सर्वं तवसर्ववृत्तम् ॥ इतिहसन् ॥

किंच—

(ते) ख्यापयामीश्वर वामवृत्तं व्यङ्ग्यार्थसंशोभितचित्रयुक्ते ।
कल्कीति सूक्ष्मेक्षिकया प्रसिद्धे यथार्थनिर्भीतिविमर्शयुक्ते ॥ १२२

आनन्दविकटन्नाम्नि पत्रे ते वृत्तमादितः ।
प्रख्यापयामि च रसो हास्याख्यो यत्र पुष्कलः ॥ १२३

व्यङ्ग्यप्रधानरचनाचमत्कारश्चकास्ति च ।
यत्पाठो वेदपाठादप्यधिकोऽद्य नृणामभूत् ॥ १२४

किंबहुना—

(ते) ख्यापयमीश्वर वामवृत्तं वृत्तान्तपत्रेष्वखिलेषु कृष्ण ।
विमर्शयिष्ये तव वामवृत्तं हिन्द्वाख्यपत्रे द्रविडैरभिज्ञैः ॥ १२५

नैतावदेव किंतु ॥ यदावयोर्वृत्तमिदं समग्रं तद्द्राविडन्नामकवृत्तपत्रे ।
विलेखने तानपि चोदयिष्ये नास्तीति ये त्वां च लिखन्ति धीराः ॥

न भोक्ष्यसे चेदहमेव कृष्ण रथ्यासमीपस्थितभित्तिकासु ।
वाल्पोस्टुमूले प्रकटीकरिष्ये त्वां केवलं निर्गुणमेव कृष्ण ॥ १२७

कृष्णो नित्यब्रह्मचारी निर्लेपो निर्ममोऽमलः ।
प्रख्यापयामि भो स्वामिन्यदि भक्ष्याणि भोक्ष्यसे ॥ १२८

एका क्रिया द्व्यर्थकरी भुक्त्या कीर्तिश्च (साध्यते) सिध्यति ।
नटो विटो गायकश्च चोरो याचनको हरिः ॥ १२९

प्रख्यापयामि भो स्वामिन्न च स्वीकुरुषे यदि ।
उद्घाटये मर्मवृत्तं सर्वं ते गोकुले कृतम् ॥ १३०

किंच—

विश्वासपूर्वं त्वनुधावकं मां किं वा न जानासि कृपा न तेऽस्ति।
आक्रन्दनं कृष्ण हरेऽच्युतेति किं न श्रुतं वा किमु भाषसे नो ?॥
गोवर्धनोद्धारक गोपवेष कृष्णापदुद्धारक पाहि विष्णो।
गजेन्द्रसंरक्षक रक्ष कृष्णेत्युद्धोषणं किं न शृणोषि कृष्ण ?॥१३२
किं विस्मृतं दासजनाभिरक्षणं किं न क्षमो वा कृपणाभिरक्षणे।
किमक्षमो वा मधुभक्षणे भवान् किमर्थमेवं समुपेक्षतेऽद्य माम् ?॥

इति मदाक्रन्दनं श्रुत्वा—

मन्दं मन्दं धावतः प्रसन्नमुखारविन्दस्य श्यामसुन्दरस्य पादाभिवन्दनं कृत्वा सविनयसम्भ्रमं हस्तारविन्दे संहत्य गृहीत्वा। अयि नन्दनन्दन सुन्दराकार रमारमण गोपसुन्दरीजार राधारमण तिष्ठ मा धाव गृहाण मधुराणि भक्ष्याणीति सम्प्रार्थयन् चुबुकं गृहीतुकामे मयि आः अरे हुम् इति सीत्कारं कुर्वन् परिवर्तितसाञ्जनकञ्जनयनः समुन्नतकुटिलभ्रुकुटिः कपटकोपाटोपमभिनयन्नरे दासोऽहं दासोऽहमिति वदन् दस्युरसि गूहितस्वभावः साधुवेषधारी मध्येऽरण्यमेकाकिनं बालकं मामवरुध्य मत्काञ्चीदामापहृतवानसि। अहो किं करोमि। माता मां ताडयेत्। इति सहासगर्भमनश्रु रुदन् अहो मत्करग्रहणाकर्षणवशात् काञ्चीदाम त्रुटितम्। परश्शताधिका रत्नखचिता हेमकिङ्किणिकाः परितो विस्रस्ताः। धात्री मां सन्ताडयेत्। किं करोमीति कराभ्यां मुखमाच्छाद्य रुदन्निव तवेदं वामवृत्तं साधूनां समाजेषु निवेदयामीति द्रुततरं दुद्राव। तदानीमहं अहो किमिदमन्यदाचरतो मे

अन्यदापतितम् । स्थली चेयमरण्यानी । बालोऽयममूल्यालङ्कारभूषितः 'बालोऽयं मुग्धः । वृद्धोऽयं शठ' इति मां परिवदेयुरेव लोकाः । तालवृक्षाधःकृतपयःपानमिव दुस्समाधेयोऽयं सन्निवेशः । किमहं करोमि । यद्वा तद्वा भवतु । 'मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयो'रिति हि श्रीमुखोक्तिः । परं तु तत्पीताम्बरं मत्करतलेऽस्ति । व्यक्तं सन्देहकारणम् । अहो किं करोमि ? क्व गच्छामि ? । अहो हास्याय वाचा भगवति मिथ्याभिशंसाकर्तुर्ममैव सत्यमभिशस्तिः प्राप्तप्राया । 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते' इति हि शास्त्रसरणिः । अस्तु किं मयापराद्धम् । सत्यमेव जयते नानृतं । करग्रहणे कृते कथं काञ्चीदाम त्रुट्येत् । अर्थनिर्णये कार्यकारणभावग्रहो हि परमप्रयोजनकः । बलात्कृतात्करग्रहणात् काञ्चीदाम त्रुटितमिति व्यामोहयति विश्वमोहनः । 'अहो भगवतो माया मायिनामपि मोहिनी' इति वदन्ति समयज्ञाः । नात्र व्याप्तिग्रहः कार्यकारी । विषमालङ्कृतिरिवाभाति भगवतश्चर्या । विस्रस्ता हेमकिङ्किण्यः परितो ह्यरण्यान्याम् । प्रज्वलितभाभी रत्नकिङ्किणीभिरावृता विपिनभूमिश्शारदकृष्णपक्षनिशेव विभासमानतारकावलीविभ्रममातनोति । अहो भागवती माया । वत्सापहर्ता विधातेवाहमस्मि स्मयसम्भ्रमास्तचेष्टः । अस्तु । 'न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्' इति हि श्रीमुखोक्तिः । अतो न खिद्ये । खेदमोदावनात्मधर्मौ हि । 'सुखप्रसन्नो ह्यचिरेण शम्भुः कृच्छ्रप्रसन्नो हि चिरेणविष्णु'रिति हि साधूनामुक्तिः । परीक्ष्य सन्तारयत्येव ह्यच्युतो मामन्तत इति धैर्यमवलम्ब्य । अये मायामाणवक

त्वदेकशरण्येऽपि मयि मायां वितत्य क्रीडसि । 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति वचनं किं नु विस्मृतम् । नहि नहि अरे मयैव विस्मृतम् । (इतिस्मृतिमभिनीय भगवन्तं सम्मुखीकृत्य) गलित-पीताम्बरो भवानिदानीं निर्मायोऽसि । आः ज्ञातं । न मे भीः । मेव खल्वद्य पीताम्बरः । पीताम्बरस्यापि भवतः पीताम्बरविद्यां प्रदर्शयामीति वदन् । (सानुनयं) अये विलोकय पीताम्बरविद्यामिति स्वकराभ्यां पीताम्बरमाभून्वन् ॥

एकद्वित्रिचतुःक्रमेण गणनां कृत्वा प्रदास्ये (हरे) ऽखिलान्
हैमान्किङ्किणिकानरण्यसिकताकुञ्जावटान्तश्च्युतान् ।
कुर्वाणान्त्रिदिशो दिशो वितिमिराश्चैकैकशो गृह्यताम्
धात्र्यै माविनिवेदयाच्युत रहःकार्यं रहोगच्छतु ॥ १३४

गद्यम्—इति वलयाकारेण परिभ्रमन् कुञ्जतलद्रुञ्जामणी-न्नुद्धृत्य परश्शताधिकानिमान् हैमकिङ्किणिकान् गृहाण भो गृहाणेति पद्मपर्णे निक्षिप्य स्वामिन् पुनर्गणय मा विस्रंसय बिसतन्तुभिस्संग्रथ्य दास्यामीति वदन् एवं प्रार्थनोपाचारं कर्तुं प्रवृत्तोऽस्मि ॥

यथाः—

स्वामिंस्त्वत्करपल्लवाञ्चलसमाकृष्टया च काञ्ची कथं
त्रुट्येत्तेऽघटनाघटात्मकमिदं कृत्यं भवेदद्भुतम् ।
त्वं वा कर्तुमकर्तुमन्यथयितुं शक्तोऽसि मां क्षाम्य भोः
श्रीमद्गोपवधूटिकारमण भोस्सत्यं वदाद्य प्रभो ॥ १३५

भक्त्युल्लाससहासनर्मवचनश्रोतुस्तवाधावतः
आह्वानार्थनलालनानुनयवाक्सम्प्रार्थनाघोषणैः ।

पश्चाद्धावनमार्गरोधनमुखा ये वा कृता मौढ्यतः
क्षन्तव्या मम मन्तवो यदुपते राधावधूवल्लभ ॥ १३६

गद्यम्—इति स्तुत्वा भो गोपाल इमां द्वितीयां पीताम्बर-विद्यामवधारयेति करेण पीताम्बरं विधून्वन् अखिलब्रह्माण्डभाण्ड-मूलमृत्तिकावटे तव पटे यानि यानि चित्राणि सन्ति तानि विलोक-येति ॥

धावन्तां गिरयो जवेन तरवो गच्छन्तु यत्र क्वचि-
त्तिष्ठन्तु प्रविलीय सप्तमरुतश्चापस्तु निश्शृङ्खलाः ।
लम्बन्तां गगने च गण्डदृषदो भ्रश्यन्तु तारा भुवि
स्वामिन्नन्दतनूज पश्य लसितं पीताम्बरस्याधुना ॥ १३७

स्वामिन् खे सुरसिद्धचारणविहाराद्रिस्त्रिकूटो ह्ययं
एष स्वर्गवधूविलाससदनंश्श्रीसानुमान् मन्दरः ।
शैलोऽयं मलयाचलस्सुरभिलश्श्रीपारियात्राचलः
कैलासो गिरिजाहराधिवसतिस्त्वायाति पश्याधुना ॥ १३८

गद्यम्—अयि बहुमाय सकलसुरनिकरैस्सह पाकशासनमि-हानयामि । विलोकय पीताम्बरस्येमामघटनघटनापटीयसीं शक्तिम् । अथवा त्रिभुवनसृष्टिचतुरं कमलासनमिहाह्वयामि । अहो पश्य पश्य । अथवा ॥

ब्रह्मविद्यास्वरूपिण्या शर्वाण्याऽऽश्लिष्टरूपिणम् ।
ज्ञानमार्गोपदेष्टारमष्टमूर्तिं विलोकय ॥ १३९

गद्यम्ः—स्वामिन्निदं चावधेयम् ॥

वक्षोदेशे कमलजनितां न्यस्य सुप्तं पयोब्धौ
भैष्मीं हृत्वा स्वजननिकटात्स्यन्दनेन प्रयान्तम् ।
गोपीकान्तावसनहरणे लब्धवर्णे च कृष्णं स्त्रीणां
तार्क्ष्यारूढं त्वरितगतिनायन्तिमालोकय त्वम् ॥ १४०

स्वामिन् स्वामिन् पश्येदं महदद्भुतम् ।

यथाः—

नवकुवलयदामश्यामलं पश्य बालं
ललितपदविलासैस्सन्तमग्रे च धात्र्याः ।
त्वामित्र स स इव त्वं पश्यतां नास्ति भेद-
स्सकलमपि विचित्रं पश्य पीताम्बरे ते ॥ १४१

राधा गामवलम्ब्य तिष्ठति मुदा श्रीकृष्णलग्नेक्षणा
ऊधस्सन्धितवेणुनाळविवराद्गोः पाययन्ती पयः ।
किञ्चित्कुञ्चितपूर्वकायलतिकोऽत्यर्थं पिबंस्तत्पयो
राधाभावसरोजसौरभसमाघ्राणातुरो वीक्षते ॥ १४२

किमितोऽपि वच्मि । स्वामिन् स्वामिन् क्षमस्व अण्डपक्षि शावक-परिहासन्यायेन भवन्तमतिवदन्न जिह्रेमि । अस्तु प्रकृतमनुसरामः ॥

गृहाण भक्ष्याणि मनोहराणि रङ्गेश यावन्ति तवेप्सितानि ।
वाक्यं मदीयं न शृणोषि चेत्त्वां बध्नामि साहाय्यबलेन युक्त्या ॥

इति

काञ्चीमण्डलकाकवाकनिलयश्रीकृष्णनाम्ना मया
राधामाधवपादपद्मभजनोत्कण्ठेन सन्दानितः ।
काञ्चीमण्डलकामकोट्यधिपतेः कर्णावतंसीकृतो
राधामाधवपृष्ठधावनकथाश्वासो द्वितीयो गुरोः ॥ १४४

इति श्रीमदुमारमणकरुणासमासादितानवद्यमृदुपद्यकविताभूषणस्य श्रीनन्दनन्दनपदारविन्दभजनानन्दतुन्दिलहृदयस्य वरिवस्यापरितोषितसाधुनिकरस्य काञ्चीकामकोटियतिराडास्थानविद्वत्कवेः काञ्चीमण्डलमण्डनायमानकाकवाकाग्रहाराभिजनस्य श्रीकुप्पयापराभिधेयवेङ्कटकृष्णश्रौतिसुब्बलक्ष्म्यम्बापुत्रस्य आत्रेयगोत्रस्य सौजन्यसौशील्यमहिताया: श्रीजानकीनाम्न्यास्सीमन्तिन्याः प्रियभर्तुः पञ्चद्राविडान्तर्विभागभूतान्ध्रस्मार्तभूसुरवंशसञ्जातस्य, महितस्वभावस्य श्रीराधावल्लभे भगवति न्यस्तसर्वात्मभावस्य मम कृष्णाभिधानस्य कृतिषु भगवदनुधावनाभिधाने विचित्रकथासंविधाने चम्पूप्रबन्धे पीताम्बरशक्तिवैभवप्रख्यापकनामा द्वितीयाश्वासः ॥

॥ श्रीश्रीश्रीसद्गुरुचरणारविन्दार्पितो भवतु ॥

राधामनोनाथपदानुधावनाभिधानके रम्यतरप्रबन्धे ।
पूर्णो हि पीताम्बरशक्तिवैभवप्रख्यापकाश्वासवरो द्वितीयः ॥ १४५

श्रीकृष्णार्पणमस्तु ॥

॥ श्रीरस्तु ॥

# ॥ अथ तृतीयाश्वासः ॥



राधामनोनाथपदानुधावनाभिधानकेऽस्मिन् रसवत्प्रबन्धे ।
पीताम्बरालङ्करणार्थ वृत्तं तृतीयमाश्वासमिमं शृणु त्वम् ॥ १

काञ्चीस्थकामकोटिपीठपते धर्मरक्षणाभिरते ।
हैमवतीपदपूजाभिरते नतशिष्यसन्ततेऽविरतम् ॥ २

यथाः—

अपारसंसारमहासमुद्रसत्कर्णधाराय नमोऽस्तु तुभ्यम् ।
स्यात्क्षेपणीपाणिगतो हि दण्डः स्यादातरो वः पदवन्दनादिः ॥ ३

इति स्तुत्वा कृतिपतिं जगदीशाकृतिं गुरुम् ।
सुप्रसन्नं विधायाथ कथां संश्रावये पुनः ॥ ४

यथाः—

मर्त्यो हि युक्त्या स्ववशीकरोति सिंहादिजन्तून(पि)तिसत्त्वयुक्तान् ।
मर्त्यो हि युक्त्या त्रिदिवं प्रयाति कर्मादि कृत्वा सुरतोषणेन ॥ ५

मर्त्यो ह्यलभ्यामणिमादिसिद्धिं
प्राप्नोति शा(स्त्रीयसुसूक्ष्म)स्त्रानुविधानयुक्त्या ।
भक्त्या विरक्त्या सुविचारयुक्त्या
तदेकसक्त्या गुरुदत्तया च ॥ ६

किं वान्ततो मुक्तिमपीह मर्त्यः प्राप्नोति युक्तिस्सकलार्थ(सेतुः)हेतुः ।
अपारशास्त्रार्णवसन्तितीर्षोर्युक्तिं हि सेतुं कथयन्ति सन्तः ॥ ७

दुष्पारवादार्णवमन्तितीर्षोर्युक्तिं तरिं वा प्रवदन्ति सन्तः ।
युक्तिर्हि वादाहवकेळिरङ्गकेतुर्जिगीष्वोर्भवति प्रसिद्धा ॥
गद्यमः—युक्तिर्हि द्विविधा शास्त्रीया लौकिकी चेति ॥
आदौ शास्त्रीयां मम युक्तिं शृणु ॥

यथाः—

शास्त्रदेशिकसहायसाधनस्साधुसङ्ग(सहवास)सुसहाययुक्तितः ।
नामसंस्मरणमन्त्रशक्तिमान् बिल्वपत्रतुलसीप्रभावतः ॥
(प्रेमभक्तिदृढरज्जुभिर्हरे त्वां रुणध्मि हृदि योगसाधनैः ॥)

लौकिकयुक्तिं शृणु—

मार्गे गोपाङ्गनापाङ्गवागुरां विदधामि ते ।
सारङ्ग इव धावन्मे हस्तलग्नो भविष्यसि ॥ १०

पथि श्रीराधिकाचित्रपटं बध्नामि ते पुरः ।
तद्दृष्टेः मन्दवेगं त्वां पश्चाद्भ्रामि युक्तितः ॥ ११
बिल्वं च तुलसीं मार्गे सर्वतः प्राक्षिपामि ते ।
ततो मन्दगतिं कृष्ण पश्चाद्भ्रामि युक्तितः ॥ १२

सहायं शृणु—शक्तिः कलौ सङ्गतेति वाक्या-
त्सत्सङ्गसाह्यं समुपार्जयित्वा ।
यथाकथञ्चिद्बहुभिस्समेत्य गृह्णाम्यनुद्रुत्य भवन्तमद्य ॥ १३

एकोऽद्वितीयो हि भवान्प्रकृत्या संख्यातिगाः कृष्ण वयं हि जीवाः
सहायसम्पन्महती ममास्ति शृण्वद्य वक्ष्ये भगवन् यथावत् ॥ १४

आलम्बनाद्बलवतां क्रमशः कृशोऽपि
नूनं बली भवति शम्भुशिरश्शशीव
तच्चन्द्रशेखरगुरोरत्रलम्बनेन
नूनं भवामि बलवानयि नन्दसूनो ॥ १६

तत्रादौ-

भो कृष्ण काञ्चीपुरकामकोटिपीठाधिपा मे कुलदेशिका हि ।
जानीहि तेषामिह साह्यतस्त्वां गृह्णामि तच्छिष्यजनो यतोऽहम् ॥
ये वीक्षणालापबलाद्विनेयाननुक्षणं पान्ति कलेर्विमोहात् ।
श्रीचन्द्रचूडेन्द्रसरस्वतीतिप्रख्यातिभाजो जगतीतलेऽस्मिन् ॥ १७
सद्धर्मसंरक्षणजागरूका गुरुप्रवेका हरिभक्तवर्याः ।
महांस्त्वदन्वेषणसाह्यकर्तॄन् बहूञ्जनान् प्रेषयितुं समर्थाः ॥ १८

किंच—

गृह्णाम्यनुद्रुत्य च मद्रपुर्गुहानन्दाख्यसन्मण्डलसाह्यतोऽथवा ।
श्रीसुब्रमण्योऽस्ति गुरुस्सखा च मे प्रज्ञायुतो यत्र समाजदेशिकः ॥
आहुश्चिदानन्दसनाथनाथदीक्षाभिधेयेन च यं महान्तः ।
नटराज श्रीमज्जगदीशसामिशास्त्रित्रयं यत्र हि मन्त्रिवर्गः ॥ २०
(यं धर्मसाम्राज्यमहेन्द्रकामकोटीशितुः प्राहुरुपेन्द्रतुल्यम् ।)
मद्रासुशाखानगरे हि नुङ्गम्बाकाभिधे धार्मिकभक्तयुक्ते ।
अजस्रसच्चिन्तनमद्विचारप्रचारणार्थोपनिषन्मठोऽस्ति ॥ २१
नित्यं प्रगे शाङ्करभाष्यपाठस्सायं च वासिष्ठकथाप्रसङ्गः ।
नैष्कर्म्यसिध्यादिविचारणा च यत्रान्तराळे प्रचलत्यजस्रम् ॥ २२

मध्ये तथा भागवतप्रसङ्गो मुमुक्षुसन्तारणकारणा (र्थम्)र्थः ;
श्रद्धालुभिर्भक्तजनैस्सदापि सञ्चाल्यतेऽचञ्चलधर्म(भक्ति)निष्ठैः ॥

श्रीशङ्करोक्तिरसिकोस्सुगुणी विवेका-
नन्दाह्वयो यतिवरो मठपालकोऽस्ति ।
मत्षड्ढकोऽपि महदेवसमाह्वशास्त्री
कल्याणसुन्दरबुधोऽपि बुधप्रवेकः ॥ २४

चोष्यीकृतो येन निगूढभावो मनीषिणा शाङ्करभाष्यसारः ।
विपश्चिता येन मनुष्यमात्रो भाष्यार्थविज्ञः क्रियते सुखेन ॥ २५

समाजसम्पोषणबद्धदीक्षस्सन्मार्गगस्सुन्दरमय्यराख्यः ।
सद्वृन्दविश्राणनलब्धकीर्तिः यः प्राच्यपाश्चात्यकलाप्रवीणः ॥ २६

श्रद्धालवः श्रीगुरुमूर्तिमुख्यास्सन्त्येव मे तत्र हरे सखायः ।
गृह्णामि तेषामपि साह्यतस्त्वां किं वा मुधा कृष्ण पलायनेन ॥ २७

मद्रास्नगर्यामयि सोमदेवशर्माभिधो मेऽस्ति बुधप्रवेकः ।
गृह्णामि तत्साह्यबलाद्भवन्तं कथं क्व वा धावसि राधिकेश ॥ २८

मद्रासुशाखापुरमाम्बलेऽस्ति प्रख्यातनामा विबुधाग्रगण्यः ।
नटेशशास्त्री कडलंगुडीति गृहोपनामा शुकनामसज्ञः ॥ २९

यस्सूत्रभाष्यं सुगमं चकार स्वदेशभाषार्थविलेखनेन ।
गृह्णामि तत्साह्यबलेन नूनं मा धाव राधाधव बालकृष्ण ॥ ३०

अथ—

जवादुदीच्यां दिशि वात धावंस्तिरोहितः स्याद्यदि वा भवान्मे ।
तन्त्रीं प्रदास्ये पथि संनिरोद्धुं नेह्रूरुसंवासिमहाजनेभ्यः ॥ ३१

श्रीरामठान्ध्रार्धगृहोपनाम श्रीकृष्णयार्यादिमहाजनेभ्यः ।
श्रीविश्वनाथाभिधशास्त्रिमुख्य नेल्लूरुपूःसंस्थितवैदिकेभ्यः ॥ ३२

श्रीगाजुपल्लीहनुमद्बुधेन्द्र श्रीशेषशास्त्र्यादिसुधीमणिभ्यः ।
श्रीतूमुल्लूर् श्रीशिवरामुख्यपरार्थवाग्वा(द)दिशिरोमणिभ्यः ॥ ३३

परोपकाराय धृतव्रतेभ्यः प्रख्यातविश्राणनकीर्तिमद्भ्यः ।
निष्कामकर्माचरणोत्सुकेभ्यस्सदाभवद्दर्शनलालसेभ्यः ॥ ३४

ते त्वां निरुन्धन्ति पिनाकिनीतटे श्रीनामसङ्कीर्तनघोषसंयुताः ।
वेदस्वनैर्मङ्गलवाद्यनिस्वनैश्श्रीराम कृष्णेत्यविरामघोषणैः ॥ ३५

तत्सन्निरोधाच्छ्लथधावनं त्वां तदा रसास्वादनलीनचेष्टम् ।
गृह्णाम्यनुद्रुत्य च पृष्ठतोऽहं किं वा मुधा कृष्ण पलायनेन ॥ ३६

आशामुदीचीमपि दर्शयित्वा यदि प्रतीचीं प्रति धावसि त्वम् ।
एर्पेडुश्रीमन्मलयाळसाधुसहायतस्त्वां पुरतो निरुध्य ॥ ३७

त्वत्पादपद्मे च मदीयदोर्भ्यां बध्नामि मा धाव वृथाद्य कृष्ण ।
पाश्चात्यदेशेषु निलीय वर्ते यन्मां ग्रहीतुं न हि शक्ष्यसि त्वम् ॥

ब्रूषे यदीत्थं भगवन् शृणु त्वं तत्रापि मे साह्यकरा वसन्ति ।
काळीकृपालब्धमहाविवेक श्रीरामकृष्णाख्ययतीन्द्रशिष्याः ॥ ३९

णु यथा—

हिन्दूवेदान्तविज्ञानप्रचारकसभासदः ।
मद्रासुशाखानगर मैलापूर् मठवासिनः ॥ ४०

श्रीरामकृष्णबोधात्त भक्तिज्ञान शुभाशयाः ।
विवेकानन्दसंघस्थास्साह्यं मे कुर्वते ध्रुवम् ॥ ४१

चीनरष्याजपान् जर्मन्निङ्ग्लण्ड्फ्रान्स्वभिधेषु च ।
सर्वसम्पत्समृद्धेषु पाश्चात्यविषयेष्वपि ॥ ४२

भौमस्वर्गेष्वमेरिकाख्यश्रीमद्देशेषु सर्वतः ।
त्वन्मार्गणे सहायार्थमेते सन्ति शृणु प्रभो ॥ ४३

निर्विकल्पानन्दनामा नित्यानन्दाभिधो महान् ॥
हृषीकेशनिवासिश्रीशिवानन्दसरस्वतिः ॥ ४४

अन्ये च बहवस्सन्ति परोत्तारणकारिणः ।
स्वात्मविज्ञानसमितेरुपाध्यक्षो महामतिः ॥ ४५

श्रीप्रभास् चन्द्रबोसाख्यः प्रख्याताध्यात्मवित्तमः ।
पाश्चात्यविषयेष्वात्मविज्ञानोद्बोधनक्षमः ॥ ४६

आत्मानन्दगिरिर्नामा स्वात्मविज्ञानबोधकः ।
स्वात्मविज्ञानसमितिकार्यदर्शी महामतिः ॥ ४७

आनन्दाश्रमवासी श्रीरामदासुसमाह्वयः ।
पाश्चात्यदेशेषु रामनाममाहात्म्यबोधकः । ४८

भक्तिश्रद्धाजुषां सम्यग्जिज्ञासूनां महाधियाम् ।
भक्तियोगविधानेन नाममाहात्म्यबोधनम् ॥ ४९

कर्तुं यियासुरचिरात्तत्साह्यं लभ्यते मम ।
भक्तिश्रद्धास्वरूपिण्योः कृष्णाबायूललितांम्बयोः ॥ ५०

स्वामिनामनुयायिन्योस्साह्येनान्वेषयामि भोः ।
सायिबाबाभक्तसङ्घसाह्येनान्वेषयामि भोः ॥ ५१

मेहर्बाबासमाख्यातः प्रख्यातस्साधुसत्तमः ।
प्रेमभक्तिसमायुक्तस्त्वत्कलाप्रभवो हि यः ॥ ५२

तत्साहाय्यादपि त्वां तु देशदेशान्तरस्थितम् ।
अन्विष्य बध्नामि हरे मुञ्चामि त्वां न तु कचित् ॥ ५३

अथवा—

गौडेषु वङ्गेषु निलीयसे चेन्नटेशनामा मम मित्रवर्यः ।
मद्रासमीपेऽस्ति महानुभावः सदा सतां पादसरोजसेवी ॥ ५४

श्रीकृष्णचैतन्यमहाप्रभूणां विश्वासपात्रं परमान्तरङ्गः ।
साह्यं करोतीश विचिन्वतस्त्वांवात्सल्ययुक्तो हरिदासवर्गे ॥ ५५

यः कृष्णसन्दर्शनलालसानां मार्गोपदेष्टा मधुरस्वभावः ।
तद्देशभाषास्थलसंनिवेशविज्ञस्सदा नामजपानुशीलः ॥ ५६

अथवा—

गौडेषु वङ्गेषु निलीनमाराद्विचिन्वतस्त्वां मम साह्यकारी ।
अनन्तकृष्णाभिधशास्त्रिवर्यः परोपकाराभिरतोस्ति वाग्मी ॥ ५७

यश्शास्त्ररत्नादिमहामहोपाध्यायान्तपट्टैस्समलङ्कृतोऽभूत् ।
विचित्य मह्यं स महान् भवन्तं वशं नयेत्कृष्ण पलायसे क ॥ ५८

चेरेषु चोळेषु च पाण्ड्यदेशेष्वथापि कर्णाटककेरलेषु ।
प्रविश्य याम्यां ककुभं निलीय वर्तिष्यसे त्वं शृणु तर्हि कार्यम् ॥

यथा—

मद्रास्नगर्यां शुकनामधेयो बुधाग्रणीस्साधुयुवा चकास्ति ।
आसेतुशीताद्र्यपि मार्गणे ते जानीहि तं साह्यकरं परं मे ॥ ६०

गृह्णामि पुचेर्यरविन्दघोषाश्रमस्थमाताजिसहायतस्त्वाम् ।
गृह्णाम्यहं श्रीरमणाश्रमस्थं तद्वासि सद्वृन्द बलादपि त्वाम् ॥ ६१

किं बहुना—

आरभ्य काञ्चीं बहुपत्तनेषु क्षेत्रेषु कावेरि(समीपगेषु)नदीयुतेषु ।
ग्रामेषु पल्लीषु नदीसमुद्रकूलेषु वा शैलगुहान्तरेषु ॥ ६२
श्रीत्यागयारोपितभक्तिकल्पलता हि येष्वेव फलावनम्राः ।
येष्वेव शैवस्सममयश्रितानामभीष्टविश्राणनकामधेनुः ॥ ६३
बोधैश्चतुर्णां शिवदेशिकानां भक्ता बभूवुर्बहवोऽपि येषु ।
बोधैश्चतुर्णां शिवदेशिकानां बौद्धा बभूवुश्च विदेशपान्थाः ॥ ६४
त्रिषष्टिभक्तास्त्रिसरोजभक्तास्स्थिता हि येष्वेव महस्थलेषु । T
आसंश्च ते द्वादशभक्तवर्या रामानुजीया अपि येषु सन्तः ॥ ६५
श्रीताम्रपर्णीतटिनीतटेषु तिष्येऽपि वैकुण्ठसमेषु कृष्ण ।
सर्वत्र तुल्यव्यसनास्सखायस्त्वदेकताना बहवो महान्तः ॥ ६६
श्रद्धालवो गानविशारदा मे त्वन्मार्गणे साह्यकरा वसन्ति । (भवेयुः)

किंच—

एलालताजालकुडङ्गकेषु ताम्बूलवल्लीयुतनिष्कुटेषु ॥ ६७
वातालयाख्यादिशुभस्थलेषु त्वां नारिकेळक्रमुकावलीषु ।
लीनं ग्रहीतुं मम भो मुरारे साह्यं वितन्वन्ति हि केरलेषु ॥ ६८
अप्यग्रजाता बत निम्नजाता बाला युवानः स्थविराः कुमाराः ।
त्वन्नामसङ्कीर्तनगानलोलाः त्वदेकतानास्सरलस्वभावाः ॥ ६९
गृह्णामि तेषामथ साह्यतस्त्वां यत्नस्त्वदीयो विफलो हरे स्यात् ।
मा धाव राधाधव बालकृष्ण गृहाण भक्ष्याणि नमो नमस्ते ॥ ७०

हिन्दूमतारामसुरक्षणाय यस्याज्ञमाभेद्यसुकण्टकावृतिः ।
तस्य प्रजानीकमनोऽनुरञ्जकोपन्यासकाग्रेसरचक्रवर्तिनः ॥ ७१

उमामहेशाख्यसुपण्डितस्य प्रभाकराभिख्यगृहोपनाम्नः ।
पाश्चात्यविज्ञानवशोत्थनूत्नसन्देहसन्दोहतमिस्रभानोः ॥ ७२

श्रुतिस्मृतिन्यायपुराणजालदुरूहसन्देहनिवारकस्य ।
विमर्शविज्ञानमनोज्ञसूक्तिसुधारसास्वादनलीनचित्तम् ॥ ७३

(गृह्णाम्यनुद्रुत्य सुखं भवन्तं किं वा मुधा कृष्ण पलायनेन ।)
त्वां श्रीजटावल्लभगेहनामसद्धार्मिकश्रीपुरुषोत्तमेन ॥
विस्रम्भसम्भाषणलीनचित्तं गृह्णाम्यनुद्रुत्य हरे मुरारे ॥ ७४

सख्युर्ममास्यानुचरास्सनातनाश्वाङ्ग्यविद्याप्रमुखा लसन्ति वै ।
श्रुत्युक्तधर्माचरणात्सुकान्तरास्त्वत्पादकञ्जद्वयभक्तिसंयुताः ॥ ७५

गृह्णामि च त्वां विजयाख्यवाटीसद्भक्तसंघस्य बलेन च त्वाम् ।
यस्याधिनेता कुशलोऽस्ति श्रीनिवासह्वयस्साधकरोऽतिमात्रम् ॥ ७६

यन्मण्डितं पण्डितपुण्डरीकैश्श्रीपुण्डरीकाक्षपदाब्जभक्तैः ।
माणिक्यसन्माधवरामवेङ्कट्रामाख्यसद्वेङ्कटशास्त्रिमुख्यैः ॥ ७७

---

अखण्डसङ्कीर्तननामवैभवप्रधानसिद्धान्तवचोविमर्शनम् ।
श्रुत्वा श्रुतिन्यायसमन्वयान्वितोपन्यासभङ्गीप्रविलीनमानसम् ॥ ७८

(गृह्णाम्यनुद्रुत्य भवन्तमद्य किं वा मुधा कृष्ण पलायनेन)

रत्नत्रयं विजयवाडमहानगर्यां श्रीपादकृष्णकविराजमणिर्वदान्यः ।
चुण्डूरुवेङ्कटवदान्यशिरोमणिश्च श्रीहेमपल्लिकनकाह्वसतीललाम ॥

सन्ति त्वदन्वेषणकर्मणे मे साह्यं विधातुं परमान्तरङ्गाः ।
सदा भवत्पादसरोजचिन्तापरायणास्साधुवरास्सखायः ॥ ८०

त्वन्मार्गणौपयिकभक्तिरसप्रधानसद्ग्रन्थसाधनसुमण्डलपालको यः ।
श्रीबुल्सुगेहजनितो मतिमानतीव सूर्यप्रकाशविबुधोऽस्तिसहायकारी ॥

तत्रैव मे वेङ्कटसुब्रमण्याभिधोऽस्ति मे चिव्कुलगेहनामा ।
स्वामिंस्त्वदन्वेषणसाह्यकारी सदा भवत्पादसरोजसेवी ॥ ८२

सद्भक्तिसुज्ञानविरक्तिशाली त्वदेकतानो हि पिता यदीयः ।
तत्रैव कौतागृहनामधेयः श्रीसूर्यनारायणरावुनामा ॥ ८३

महामतिर्वैदिकपोषकोऽस्ति गृह्णामि तत्साह्यबलेन वा त्वाम् ।
तत्रैव तद्भ्रातृसुतश्चकास्ति श्रीसुब्बरावुप्रथितप्रभावः ॥ ८४
(यो वेदशास्त्रज्ञसहायकारी गृह्णामि तत्साह्यबलेन कृष्ण ।)

श्रुत्युक्तसद्धर्मविरोधिमल्लादनेन सार्थीकृतगेहनाम्नः ।
मल्लादिगेहाभिधरामकृष्णमहाग्निचित्पण्डितशेखरस्य ॥ ८५

पुत्रो हि राजति परं महितस्वभावः
श्रीवीरराघवमखी निखिलागमज्ञः ।
श्रुत्युक्तधर्मपरिपालनजागरूको
गृह्णामि तस्य विदुषोऽपि सहायतस्त्वाम् ॥ ८६

श्रीदक्षिणामूर्त्यभिधो बुधस्तद्भ्रातास्ति यस्सर्वकलाधिनाथः ।
श्रुतिस्मृतिन्यायपुराणविज्ञो गृह्णामि तत्साह्यबलेन कृष्ण ॥ ८७

चन्द्रशेखरमनीषिभारताम्नायसंश्रवणलीनमानसम् ।
कृष्णमूर्तिश्रुतिगीतिसारसङ्कथनसंश्रवणहृष्टचेतसम् ॥ ८८

मुल्कुटूर्धमन्नरसिंहशास्त्रिरामायणार्थश्रवणेन मुग्धम् ।
श्रीलक्ष्मिनारायणमूर्तिनामावधानिनां कर्मविपाकरीतिम् ॥ ८९

श्रुत्वा तदा प्रीतहृदं भवन्तं गृह्णामि किं कृष्ण पलायनेन ।
सङ्कीर्तनानन्दयतीन्द्रसीतारामाख्यसाधूत्तमसाश्रितो वा ॥ ९०

गृह्णाम्यनुद्रुत्य भवन्तमाशु मुधा कुतो धावसि राधिकेश ।
आगर्भभक्तो भगवत्यनन्ते प्रह्लादवद्यो हरिकीर्तनेषु ॥ ९१

श्रीराम रामेति हरे हरेति सदापि नामस्मरणोत्सुकेन ।
सन्तारिता येन नराश्च नार्यः सहस्रशो नामबलेन कृष्ण ॥ ९२

अथवा—

किं वा मुधा मामनुधावसि त्वं प्रच्छन्नवेषेण निलीय काश्याम् ।
गूढं चरिष्यामि न चास्मि वश्यस्तवेति चेन्मद्वचनं शृणु त्वम् ॥

तत्रैव राजेश्वरशास्त्रिवर्याः श्रीसुब्रमण्याभिधशास्त्रिवर्याः ।
श्रीचिन्नसाम्याह्वयशास्त्रिवर्या मित्राणि मे सन्ति हि दाक्षिणात्याः ॥

दक्षाश्च ये शास्त्रमहाटवीषु हरिं विचेतुं धिषणाख्यजालैः ।
षट्छास्त्रशस्त्रैः श्रुतिधर्मराज्यरक्षाविधानेऽव्वतिमात्रदक्षाः ॥ ९५

श्रीजीवहीराणमुखा मनीषिणस्संख्यातिगास्तद्विषयाधिवासिनः ।
भक्ता विरक्ता यतयश्च साधवस्त्वन्मार्गणे मे बहुसाह्यकारिणः ॥९६

आन्ध्राश्च तत्क्षेत्रपुरोहिता मे त्वन्मार्गणे साह्यकरा वसन्ति ।
नास्त्यद्वितीयस्य च निर्गुणस्य ते केवलस्यैव सहायसम्पत् ॥ ९७

किंच—

सद्भक्तिविज्ञानविरक्तिबोधपूर्णस्य गोब्राह्मणरक्षकस्य ।
काशीस्थश्रीमत् करपात्रनाम्नो यतीन्द्रचन्द्रस्य सहायतस्त्वाम् ॥ ९८
गृह्णाम्यनुद्रुत्य भवन्तमाशु किं वा मुधा कृष्ण पलायनेन ।
स्कन्दांशसम्भूतमिति स्म यं तु वदन्ति सद्धर्मपरायणं हि ॥ ९९
श्रीरामराज्यपरिषच्च ममातिसाह्यं कुर्याद्धि याज्ञ्बलवित्तबलाभिपूर्णा ।
यस्यां सदा त्वयि निबद्धहृदो वसन्ति एकाशयाश्च तव दर्शनलालसाश्च॥
स्त्रीयवेषपरिवर्तनेन वायोगिवेषधरणेन वा रहः ।
जाह्नवीपरिसरे निलीय वा संवसामि किमु मां करोष्यहो ॥ १०१
ब्रूषे यदीत्थं भगवन् शृणु त्वं तत्रापि मे साह्यकरा वसन्ति ।
सन्तः परेषामनुकूलकार्यपरायणास्स्युस्त्वत एव लोके ॥ १०२
कृष्ण त्वदन्वेषणतत्परस्य समानचित्ता बहवो वसन्ति ।
ये विप्रलब्धा भवता पुरापि विचिन्वते त्वां बहुकालतोऽपि ॥

अथ—

क्षेत्रे प्रयागेऽतिनिगूढवेषो वर्ते वृथा तेऽनुगतिर्ध्रुवं स्यात् ।
ब्रूषे यदीत्थं भगवन् शृणुत्वं तत्रापि मेऽस्त्येव सहायसम्पत् ॥
यः प्रेमभक्त्युज्ज्वलभावपूर्णः कर्णे च मे राममनुं जजाप ।
तत्कुम्भमेळागतभक्तबृन्दसम्बाधकालेऽपि कृपातिरेकात् ॥ १०५
आहुश्शुकं भागवतार्थमाविष्कर्तुं यमभ्यागतमेव तिष्ये ।
सख्युर्मम श्रीप्रभुदत्तब्रह्मचार्याख्यसाधुप्रभुशक्तिसाह्यात् ॥ १०६
गृह्णाम्यनुद्रुत्य भवन्तमद्य किं वा मुधा कृष्ण पलायनेन ।
हरे दयावारिनिधे पयोधिकन्यामनोनायक गोपकृष्ण ॥ १०७

बृन्दावने गोकुलपुण्यदेशे श्रीसाधुबृन्दस्य सहायतस्त्वाम् ।
गृह्णाम्यनुद्रुत्य हरे मुरारे किंवा मुधा धावसि राधिकेश ॥ १०८

श्रीद्वारकावासिमहानुभावसद्भक्तसाहाय्यबलेन वा त्वाम् ।
गृह्णाम्यनुद्रुत्य हरे मुरारे किंवा मुधा धावसि राधिकेश ॥ १०९

पूरीजगन्नाथसुभक्तबृन्दसाह्येन गृह्णामि हरे मुरारे ।
ये निर्भरप्रेमरसानुविद्धशुद्धान्तरङ्गास्त्वयि बद्धभावाः ॥ ११०

निस्वार्थलोकोपकृतिप्रसिद्धाश्श्रद्धालवस्साधुवरा महान्तः ।
अव्याजकारुण्यवशाद्भवन्तं विचिन्वतस्साह्यकरा मम स्युः ॥१११

लग्नान्तराश्च त्वयि सर्वदापि ये साधवश्श्रीमथुरानिवासाः ।
गृह्णाम्यनुद्रुत्य बलेन तेषां गृहाण भक्ष्याणि नमो नमस्ते ॥ ११२

श्रीकृष्णचैतन्यपदाब्जभृङ्गा ये साधुसङ्गाज्जितसङ्गदोषाः ।
गौराङ्गबोधामृतसारभूतमाधुर्यभक्त्युज्वलितान्तरङ्गाः ॥ ११३

श्रीरामकृष्णेत्यविरामनामजपात्तसर्वाङ्गिकसिद्धिभाजः ।
परोपकारप्रवणान्तरङ्गा द्रुतान्तरङ्गा भवतोऽन्तरङ्गाः ॥ ११४

मामङ्ग संवीक्ष्य च वङ्गदेशे साह्यं प्रकुर्युर्मम रङ्गधामन् ।
अतो मुधा धावसि किं मुरारे मा धाव भक्ष्याणि गृहाण कृष्ण ॥

यत्र यत्र हि भवान् व्रजेत्प्रभो तत्र तत्र मम साह्यकारिणः ।
सम्भवेयुरयि कृष्ण साधवो ये स्वयं परहिते कृतादराः ॥ ११६

किं बहुना—

"यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति" ॥ ११७

इति नीत्या मम जनास्साह्यं कुर्युर्न तेऽच्युत ।

अतः—

आसेतोरा च शीताद्रि भारते सुहृदोऽभितः ॥ ११८

रामानुजीयाश्श्रीजाने माध्वाश्च मधुसूदन ।
अस्मृताख्या विस्मृताख्यास्संख्यावन्तस्सहस्रशः ॥ ११९

प्रख्यातास्सन्ति तेषां च साहाय्यं मेऽस्ति माधव ।
तुल्याभिसन्धियुक्तत्वात्तुल्यव्यसनकारणात् ॥ १२०

यत्र कुत्रापि वा लीनं मह्यमावेदयन्ति ते ।
ततोऽनुद्रुत्य गृह्णामि किं मुधा परिधावसे ॥ १२१

अथवा—

गृह्णाम्यनुद्रुत्य भवन्तमाशु गुण्डूरुसद्भक्तसमाजसाह्यात् ।
श्रीनामसप्ताहमखाविरामश्रीरामनामामृतपानमत्तम् ॥ १२२

यत्राविरामैर्हरिनामघोषैरन्धाश्च मूका बधिराश्च मुक्ताः ।
समीपनीराकरवासिभेकाः काका बकाद्याश्शकुनाश्च मुक्ताः ॥ १२

यैश्शब्दविस्फोरकयन्त्रमूलतः संश्राविनैर्भेरिसमाननिस्वनैः ।
गृहावबद्धाश्च शिलाः प्रतिध्वनिव्याजेन [1]कुर्वन्ति च नामकीर्तनम्
(किं तत्र चित्रं ह्यपि चेतना नरा यन्नास्तिका नामरतास्तदाभवन्)

दिवानिशं पण्डितवाग्विलासैस्सद्भक्तिविज्ञानविरक्तिबोधैः ।
रात्रिंदिवाभेदविरामहीनश्रीरामनाम्नां मधुरैर्निनादैः ॥ १२

अगा मृगा वा लतिका यदन्तस्संज्ञाश्च सञ्जातमहाप्रबोधाः ।
यस्याञ्जनेयोऽग्रसरस्सखा मे सुग्रीववद्युक्ततरोऽस्ति शास्ता ॥ १२

---

1 (नामस्मरणं प्रचक्रिरे) (नामानि जगुः कलं हरेः)

त्र—

सङ्गीतविद्यात्मकसाधनेन श्रीराममाराध्य पुरा सुहृष्टम् ।
साहित्यविद्यात्मकसाधनेन श्रीराममाराधयितुं सतृष्णम् ॥ १२७

श्रीत्यागराजं कलयावतीर्णमाहुः पुराणार्णवपारगं यम् ।
शिलासमं वा हृदयं नराणां पुराणकाले द्रवतीति हेतोः ॥ १२८

शिलासमं श्रोतृमनः पुराणवाक्यैस्स्वयं (रयं) द्रावयतीति हेतोः* ।
सार्थीकृतो येन गृहोपनाम्नि कल्लूरुशब्दो विबुधोत्तमेन ॥ १२९

तद्वीरभद्राभिधशास्त्रिवर्यपुराणगोष्ठीश्रवणे निमग्नम् ।
गृह्णाम्यनुद्रुत्य भवन्तमद्य किं वा मुधा कृष्ण पलायनेन ॥ १३०

तेनालिमुल्पूरिगृहोपनाम्नः श्रीसुब्रह्मण्याख्यमुधीवरस्य ।
श्रीगोपिकागीतिरहस्यभावकथासुधास्वादनलीनचेष्टम् ॥ १३१

गृह्णाम्यनुद्रुत्य भवन्तमद्य किं वा मुधा कृष्ण पलायनेन ।
श्रीरायप्रोलिङ्गनसोमयाजिसद्ग्रन्थसंशोधनलीनचित्तम् ॥ १३२

गृह्णाम्यनुद्रुत्य भवन्तमद्य किं वा मुधा कृष्ण पलायनेन ।
यमाहुरार्याः पुनरेव विद्यारण्यं च जातं भवदीयभक्तम् ॥ १३३

श्रीकाशिकृष्णाख्यबुधेन्द्रगेहे सद्भक्तगोष्ठ्या सुसुखं वसन्तम् गृ···॥
यं वायुसूनोरपरावतारं कलाविदानीं प्रवदन्ति सन्तः ॥ १३४

यस्यानुगास्सन्ति सहस्रशोऽपि नार्यः पुमांसो भवदंघ्रिभक्ताः ।
श्रीलोककल्याणकृतिं पठन्तं पृष्ठादनुद्रुत्य पिधाय नेत्रे ॥ १३५

गृह्णाम्यहं श्रीविजयाख्यरामकवीन्द्रगेहे सुसुखं भवन्तम् ।

---

* तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः ॥

अचिन्त्यविष्णोर्महिमाति(भि)विज्ञं गर्गं यमाहुः परिपूर्णविज्ञम् ॥
श्रीविष्णुपारम्यनिरूपणाय यं विष्णुचित्तांशभवं वदन्ति ।
तद्वैष्णवाग्रेसरवीरवल्लिशेषाद्रिभक्तोत्तमसद्मनिष्ठम् ॥ १३७
त्वदीयपारम्यकथाविचारसङ्गीतसाहित्यविनोदलीनम् ।
गृह्णाम्यनुद्रुत्य भवन्तमद्य किं वा मुधा कृष्ण पलायनेन ॥ १३८
तत्रैव शाखानगरे सखा मे श्रीमाडभूषीति गृहोपनामा ।
अधीतनानामतसत्प्रबन्धस्सदापि सत्पण्डितपादसेवी ॥ १३९
भो पुण्डरीकाक्ष तवैव भक्तो यः पुण्डरीकाक्षसुभाह्वयश्च ।
परार्थवादी च परोपकारी त्रिलिङ्गसद्वैष्णवसम्प्रदा(यी)यः ॥ १४०
तद्ग्रन्थभाण्डारविमर्शलीनं त्वां पुण्डरीकाक्ष सुखं ग्रहीष्ये ।
किं वा मुधा धावनतो मुरारे मा धाव राधाधव बालकृष्ण ॥ १४१
कुन्दुर्तिश्रीवेङ्कटनर्सयाख्यग्रन्थालये वा सुखसंनिविष्टम् ॥
गृह्णाम्यनुद्रुत्य भवन्तमद्य हरे मुरारे किमु धावनेन । १४२
विलेखनार्थं भगवद्गुणानां पुराणजालेष्ववशोषितानाम् ॥
कलावतारेण पुनश्च जातं यं व्यासमौनिं प्रवदन्ति (भक्ताः) सन्तः
श्रीकृष्णसङ्कीर्तनशान्ततृष्णं श्रीरामसङ्कीर्तनतृष्णयेव ।
यमान्ध्रदेशे च कृतावतारं पद्मावतीशं जयदेवमाहुः ॥ १४४
सद्गानविद्वच्छिवशङ्करार्यसतालबन्धस्वरमेळनानि ।
अध्यात्मरामायणकीर्तनानि श्रुत्वा रसास्वादनलीनचेष्टम् ॥ १४५
(गृह्णाम्यनुद्रुत्य भवन्तमद्य राधापते किं तव धावनेन ।)

श्रीपालपत्यावसथाञ्जनेयप्रबोधगीतानि मनोहराणि ।
श्रुत्वा पराधीनतया निमग्नमानन्दसिन्धौ रसभावमुग्धम् ॥ १४६

गृह्णाम्यनुद्रुत्य हरे मुरारे किं वा मुधा धावसि माधवेत्थम् ।
भद्राचलश्रीरघुरामदासं पुनश्च सङ्कीर्तनतृष्णयेव ॥ १४७

यं जातमाहुर्भवदीयनाम्नामजस्रसङ्कीर्तनचिह्नहेतोः ।
सच्छ्रीयश्रीमद्रघुवर्यदामश्रीनामसङ्कीर्तनलीनचित्तम् ॥ १४८

गृह्णाम्यनुद्रुत्य भवन्तमद्य किं वा मुधा कृष्ण पलायनेन ।
काकानिनाम्ना प्रथिते स्थले च लीलास्थले श्रीशिवयोरिदानीम् ॥

अजस्रपञ्चाक्षरमन्त्रराजक्षरत्सुधास्वादनकुञ्चिताक्षम् ।
पिधाय नेत्रे च करद्वयेन गृह्णाम्यनुद्रुत्य भवन्तमद्य ॥ १५०

यत्राशुतोषेण समस्तमर्त्यास्स्वीयाभिलाषान् सुखमाप्नुवन्ति ।
यत्र प्रसन्नेन च शङ्कराख्यस्सार्थीकृतः श्रीपरमेश्वरेण ॥ १५१

नैतावदेव - त्रिलिङ्गदेशे प्रतिपट्टणेषु ग्रामेषु पल्लीषु विरामहीनम् ।
सप्ताहसप्तमहराख्यनामयज्ञेषु सङ्कीर्तननादवत्सु ॥ १५२

सम्भूय यत्राद्रहुभक्तिपूर्वं कृतेषु निद्राभरदूनगात्रम् ।
गृह्णाम्यनुद्रुत्य भवन्तमद्य किं वा मुधा कृष्ण पलायनेन ॥ १५३

कोल्लूरुगेहाभिधसोमशेखराख्यस्य षड्दर्शनदेशिकस्य ।
षड्दर्शनात्यद्भुतसामरस्योपन्यासभङ्गीप्रविलीनमानसम् गृह्णा··· ॥

तथापि धावन्तमहं जवेन हरिं तदाहं पुनरब्रवं तम् ।
हे कृष्ण गोविन्द हरे मुरारे हे बालगोपाल कृपालबाल ॥ १५५

स्वामिन्नित्युच्चैराहूय—

धावस्व धावस्व तवाध्वमध्ये एलूरुनाम्नी नगरी चकास्ति ।

तत्रेदरागारसमाह्व (योऽस्ति)युक्तो धर्मादरो वेङ्कटरावुनामा ॥

विलिख्य पत्रं शकटे जवेन सम्प्रेषये तस्य च चारमेकम् ।

यथा—

कलौ बहूनां भजतां जनानां स्वरूपसन्दर्शनलालसानाम् ॥ १५

[1]सन्तुष्टिहेतोः किल प्राकृतानां विश्वासहेतोर्मृदुलादराणाम् ।

अनुग्रहार्थं भगवानिदानीं पथामुना धावति भाग्यमेतत् ॥ १५८

भो काकतालीयसुयोगमेनमतर्कितं मा कुरु फल्गु मत्वा ।

विचिन्वतः पाणिगतौषधिवद्यदृच्छया लब्धमयाचितञ्च ॥ १५९

अयं ह्यमूल्यस्समयो न नेयो वृथा पुनर्नैव लभेत जातु ।

बालो ह्ययं श्रीयदुवंशपालो दिगम्बरो धावति राजमार्गे ॥ १६

केयूरवान्कुण्डलवान्किरीटी लम्बालकस्सन्वनमाल्यधारी ।

वित्ताद्य यूयं भगवन्तमेव विस्रस्तपीताम्बरमच्युतं तम् ॥ १६

मां चातिसन्धाय पलायमानं गृह्णीध्वमेनं नवनीतचोरम् ।

इति

चारास्यविज्ञापितगूढरूपं सन्द्रष्टुकामो बहुलोत्सुकस्सन् ॥ १६

कृत्वा पुरो वेङ्कटशास्त्रिवर्यं त्वद्रूपविज्ञानवतां वरिष्ठम् ।

---

वेङ्कटरामा अण्डुको [illegible]

1. " अर्चायामेव ~~पस्मै~~ पूजां यश्श्रद्धयेहते ।

न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥

इति श्रीभागवते ११ स्कन्धे २ अध्याये श्लोकव्याख्यानावसरे श्रीमधुसूदनसरस्वतीस्वामिनः हरिभक्तिरसायने च ॥

प्रकृतिरारम्भः । तस्यां वर्तमानः प्राकृतः । साम्प्रतं प्रारब्धभक्तिसाधनानुष्ठान इत्यर्थः ॥

यस्तर्कवेदान्तसुसार्वभौमो विज्ञातसद्भागवतान्तरार्थः ॥ १६३

(य इशास्त्ररत्नाकरपट्टभद्रश्रीमण्डलीकेतिगृहाभिधेयः ।)

वेदस्वनैर्मङ्गलवाद्यनिस्वनैः सद्भक्तबृन्दैर्बहुताण्डवोत्सुकैः ।

श्रीरामरामेत्यविरामगायकैः श्रीकृष्ण कृष्णेत्यविरामघोषणैः ॥१६४

सङ्कीर्तनैस्त्वामखिलोपचारैस्सप्ताहदीक्षाविधिसम्प्रयोगैः ।

श्रीनारदादिष्टविधानविद्भिः प्रयोगविद्भिस्सद् वेदविज्ञैः ॥ १६५

संरोधये त्वां पथि मत्प्रचोदितः परोपकारप्रवणो महान् हि सः ।

तत्र स्थितं त्वां सुसुखेन पृष्ठतः गृह्णामि मा धाव मुधाद्य कृष्ण भोः॥

थ—

श्रीवङ्गदेशागतसाधुवर्यस्योङ्कारसाधोः पुरकीर्तनेषु ।

श्रीरामरामेति हरेऽच्युतेति श्रीकृष्ण कृष्णेति हरेऽच्युतेति ॥१६७

सचेतनाचेतनभेदहीनं नामामृतासारनिमज्जितेषु ।

वैकुण्ठलोकायितमर्त्यभूषु त्वत्पार्षदीभूतसचेतनेषु ॥ १६८

अद (श्य) इष्टरूपेण समागतेषु ब्रह्मेन्द्ररुद्रादिषु लीनवृत्तिम् ।

गृह्णाम्यनुद्रुत्य भवन्तमद्य किं वा मुधा कृष्ण पलायनेन ॥ १६९

श्रुत्वा तदा श्रीभगवानुवाच हसन्मुखो मामयि वावदूक ।

त्वामेव सङ्कीर्तनलीनचित्तं प्रतार्य वर्ते जनसम्प्रवाहे ॥ १७०

किं वा करोषीति वदन् स कृष्णस्तिरोहितोऽभूज्जनसङ्घमध्ये ।

तदाहम्—

हे नन्दसूनो भगवन्मुरारे हे कृष्ण हे माधव राधिकेश ॥ १७१

हे पुण्डरीकाक्ष हरेऽसुरारे गोविन्द दामोदर वासुदेव ।

विसृज्य दीनं त्वयि लीनचित्तं क्व संस्थितोऽसीति जनप्रवाहे ॥

श्रीकृष्णरूपायितसङ्घमध्ये हरिं विचिन्वन्नतिसम्भ्रमेण ।
स्पृष्ट्वा समस्तानथ वस्त्रयुक्तान् विसृज्य सर्वान् क च तद्वि-
(वस्त्र) हीनम् ॥ १७।

निश्चित्य कृष्णं तु [1]ग्रहीतुकामे धावन् जवेनेत्थमवोचदीशः ।

यथा—

कुल्योपकुल्यावलिदुर्गमेषु गोदावरीसप्तगतिस्थलीषु ॥ १७।
लताकुडङ्गेषु च नारिकेलद्रुमावलीषु क्रमुकावलीषु ।
निलीय वर्ते न हि मां ग्रहीतुं शक्तोऽसि हि त्वं बहुभारयुक्तः
श्रुत्वा तदा श्रीभगवद्वचोऽहं सञ्जातधैर्यः पुनरत्रवं तम् ।

यथा—

नीचोऽपि वा सिंहबलस्स्वदेशे नूनं भवेदित्ययि लोकवार्ता ॥ १७६
किं न श्रुता वा भवता महात्मन् स वेगिदेशो हि मम स्वदेशः ।
सम्बन्धिनो बन्धुजना ह्यनेके मित्राणि मे सन्ति हितैषिणश्च ॥
त्वन्मार्गणायानुचरा भवेयुर्जानीहि मे कृष्ण वृथा श्रमस्ते ।
श्रीराणमहेन्द्राख्यपुरेऽपि सन्ति गोपालरावुप्रमुखा महान्तः ॥१७८
त्वद्दासदासाश्श्रुतिधर्मविद्वत्सम्पोषणोत्का बहुधार्मिकाश्च ।
त्वन्मार्गणे साह्यकरा मम स्युस्ते चापि संदर्शनलालसा हि ॥

किं च—

श्रीराणमहेन्द्राख्यपुरोपकण्ठे बहुत्र भक्ता विलसन्ति कृष्ण ।
मनीषिणोऽतीव हितैषिणो मे मित्राणि त्वन्मार्गणजागरूकाः ।
तत्रैव गोपादमहास्थलेऽस्ति भक्तो जगन्नाथ इति प्रसिद्धः ।

---

1 (मयीतिशेषः)

गौडीयशाखामठपालकश्च, श्रीकृष्णचैतन्यमतप्रबोद्धा ॥ १८१

श्रीकृष्णनामाद्वयभावबोद्धा (कृष्णस्य, नाम्नश्च सदैक्यवक्ता ।)
चैतन्यशिक्षामृतग्रन्थकर्ता ।

कृतप्रसङ्गं महता च तेन तत्र स्थितं त्वां सुमुखं ग्रहीष्ये ॥ १८२

अथ—

अदभ्रयत्नं हि विनैव यत्र चत्वारि भद्राणि भजन्ति(मर्त्याः)लोकाः ।
तन्कोनसीमाह्वयपुण्यधामा वाराणसीतोऽप्यतिपुण्यभूमिः ॥ १८३

व्यासो विसस्मार हि यत्र वासं विधाय काशीपुरनिर्गमार्तिम् ।
सदेहमुक्तिप्रददक्षवाटीसमाह्वयक्षेत्रवरोऽस्ति यत्र ॥ १८४

मुक्तीशकोटीफलिमुख्यपुण्यक्षेत्राणि यत्रैव लसन्ति कृष्ण ।
एवंविधानन्तसुपुण्यदेशे श्रीगौतमीनिर्मलनीरपूते ॥ १८५

विप्राग्रहारे मुनिखण्डनाम्नि मत्पूर्वजावासतले विशुद्धे ।
दुर्वादिमत्तेभघटा यदीयकण्ठस्वनाकर्णनमात्रभीता ॥ १८६

परम्परान्वितधर्मशास्त्रसमन्वयाख्यानककेसरी यः ।
व्याख्यानवद्यातिगभीरपद्यकवित्वविद्यासमलङ्कृतो यः ॥ १८७

रजस्वलानन्तरपाणिपीडनाभिधानदुश्शासनभीमविक्रमः ।
पुल्योपनामास्ति बुधाग्रगण्यो ह्युमामहेशो मम जातिबन्धुः ॥ १८८

त्वन्मार्गणे साह्यकरो मम स्यादतीव तद्देशविशेषविज्ञः ।
त्वन्मार्गणेऽभिज्ञतमोऽस्ति वेङ्कटरामाभिधशास्त्रिवरोऽपि बन्धुः ॥

त्वन्मार्गणे ऽभिज्ञतमोऽस्ति पुल्यगणेशनामा मम बन्धुरत्नम् ।
त्वन्मार्गणेऽभिज्ञतमोऽस्ति वेङ्कटरामाख्यशर्मा तव मर्मवेत्ता ॥

वात्सल्यभक्त्या सहितस्त्वयीशे गोविन्दवज्झल्लगृहनामयुक्तः ।

गोविन्दवात्सल्ययुता यदीयाः पूर्वे ततस्तद्गृहनाम तेषाम् ॥ १९३

त्वन्मार्गणेऽभिज्ञतमोऽस्ति पेय्यलुगृहोपनामा नरसिंहमूर्तिः ।
श्रीराममूर्तीति च खण्डवल्लिगृहोपनामा विबुधोऽस्ति बन्धुः ॥
त्वन्मार्गणे ऽभिज्ञतमोऽस्ति बन्धुः श्रीराममूर्ती बहुयुक्तिशाली ।
किंवा बहूक्त्या मम बन्धुवर्गस्त्वन्मार्गणे साह्यकरो हरे स्यात् ॥

किं च—

अजस्रवेदध्वनिपूरितेषु विप्राग्रहारेष्वभितोऽपि तत्र ।
आन्ध्राश्च ये द्राविडपूर्वजाताः श्रुतिस्मृतिन्यायपुराणविज्ञाः ॥ १९४
अप्पन्नशम्भन्नमुखा ह्यनेके संख्यावतां प्रेष्ठतमा महान्तः ।
तीर्णाः परेषामपि तारकाश्च सद्भक्तिविज्ञानविरक्तियुक्ताः ॥ १९५
(गृह्णामि तेषामपि साह्यतस्त्वां किं वा मुधा कृष्ण पलायनेन ॥)
तातोपनामा मम साह्यकारी कामन्ननामास्ति महानुभावः ।
सखा च मे भीमनपल्लिवासी चल्लोपनामास्ति च सुब्बरायः ॥ १९६
विद्वान्धनी चागमवृद्धसेवी त्वन्मार्गणातिप्रवणान्तरङ्गः ।
श्यालोऽस्ति कामेशसमाह्वयो मे यद्रूप्पल्लीमहिताग्रहारे ॥ १९७
कोराडगेहाभिधरामकृष्णाभिधो बुधो मेऽस्ति सहायकारी ।
आन्ध्राङ्ग्लयोर्यः परिपूर्णविद्वान् कर्णाटल्याटिन्द्रविडादिविज्ञः ॥
आसप्तपूर्वं विबुधा यदीयाश्चतुर्विधाभेद्यकवित्वभूषाः ।
आबालगोपालमपीह मह्यं साह्यं हि कुर्युर्मम देशजाताः ॥ १९९
किं वा बहूक्तेन हरे स्वदेशे ह्यजोऽपि हि स्याद्गजशक्तिशाली ।
पिठापुरे व्याससमहर्षितुल्यः श्रीसुब्रमण्याह्वयशास्त्रिवर्यः । २००

वाराणसीगेहसमाह्वयोऽस्ति सखा च जानीहि हरे मुरारे ।
निजामुदेशे च निलीयसे चेत् तत्रापि मे साह्यकरोऽस्ति कृष्ण ॥
बुधाग्रणीश्चिव्कुलगेहनामा ह्यप्पय्यशास्त्री कविसार्वभौमः ।
यः प्रेमभक्त्युज्ज्वलितान्तरङ्गो गर्गोक्तश्रीभागवतार्थविज्ञः ॥ २०२
(गृह्णामि तत्साह्यबलेन कृष्ण किंवा मुधा धावसि राधिकेश ॥)

किं बहुना—

श्रद्धायुता ये विविधैरुपायैश्शक्त्या च युक्त्या बहुजन्मसु त्वाम् ।
दुरासदं कृष्ण गृहीतुकामाश्चासेदुशीताचलभूमिभागे ॥ २०३
दरीषु शैलेषु नदीसमुद्रतीरेषु देवायतनादिकेषु ।
विप्राग्रहारेषु च यज्ञवार्तापुराणगोष्ठीमठचत्वरेषु ॥ २०४
श्रुतिस्मृतिन्यायपुराणधर्मशास्त्रप्रबन्धेष्वितिहासजाले ।
ग्रन्थेषु षट्छास्त्रसमन्वयार्थवाक्यार्थयुक्तेषु महत्कृतेषु ॥ २०५
दुर्वादिगर्वापहफक्किकाभियुक्तेषु सत्तर्कसमन्वितेषु ।
स्वपक्षसंसाधनमात्रकेषु निन्दाप्रधानेषु महात्मनां च ॥ २०६
कुकल्पनायुक्तदुरन्वयार्थवाक्यार्थसिद्धान्तदुराग्रहेषु ।
वैतण्डवादाभिरतैः कृतेषु ग्रन्थेषु वा खण्डनमण्डनार्थम् ॥ २०७

अथ—

विचित्रभोगस्थलसन्निवेशातलाद्यधस्तात्स्थितलोकजाले ।
कैलासवैकुण्ठसमाह्वयेषु लोकेषु सापेक्षिकमुक्तिमत्सु ॥ २०८
मध्ये पयोधेः परमे पदे च गोलोकनाम्न्यद्भुतसन्निवेशे ।
अन्विष्य चान्विष्य बहोश्च कालात् कुत्राप्यलब्ध्वा बहुशो विचार्य ॥
वैकुण्ठलोके न वसामि भक्त न योगिनां वा हृदये रवौ वा ।

गायन्ति भक्ता मम यत्र तत्र तिष्ठामि तत्कीर्तनलालसस्सन् ॥
रहोभवान्नारद मौनिने यत् प्राहस्म लोकानुजि घृक्षयैवं ।
इति स्ववाक्यं सुदृढं विधातुं यत्रास्ति लीनो हि भवाननन्त ॥
श्रीरामेति हरेऽच्युतेति मधुरं नामामृतं सादरं
यैः कर्णाञ्जलिसम्पुटैरपि मुहुः पीतं नृभिस्तत्क्षणात् ।
तेषामन्तरनुप्रविश्य च भवांस्तत्कर्णरन्ध्राध्वना
स्वैरं नृत्यति नर्तयत्यतितरां यत्र स्थले स्वानुगान् ॥ २१२
श्रीरामेति हरेऽच्युतेति मधुरं नामामृतं सादरं
स्वैः कर्णाञ्जलिसम्पुटैरपि मुहुस्स्वैरं पिबन्तोऽञ्जसा ।
भ्रष्टाश्च प्रविनष्टसर्वदुरिताश्शुद्धान्तरास्तत्क्षणा-
दाकर्षन्ति च यत्र कर्णविवरद्वारा भवन्तं हरे ॥ २१३
विष्णो कृष्ण हरेऽच्युतेति मथुरानाथेति राधापते
पाह्यस्मानिति यत्र भक्तनिवहा नक्तंदिवं (श्रद्धया)भक्तितः ।
पाषण्डानपि भक्तिभावरसिकान् कुर्वन्ति वैतण्डिकान्
भक्त्या ताण्डवपण्डितांश्च सततं यत्राञ्जसा कीर्तनैः ॥ २१४
सच्छ्रीकलौ भारतपुण्यदेशे श्रीनारदादिष्टविधानवत्सु ।
अखण्डसङ्कीर्तनघोषयुक्तसप्ताहयज्ञावरगेषु सन्तम् ॥ २१५
यज्ञेश विष्णो मधुसूदनेति गोविन्द दामोदर माधवेति ।
श्रीकृष्ण सङ्कर्षण केशवेति नारायणानन्त हरेऽच्युतेति ॥ २१६
श्रीराम नारायण वासुदेव गोविन्द दामोदर भो नमस्ते ।
श्रीनाथ विष्णोऽच्युत वल्लवीनामुल्लासकारिन् भगवन्नमस्ते ॥ २१७
दासोऽस्मि दासोऽस्मि पदाब्जयोस्तेऽहल्याघसङ्घाचलवज्रयोस्ते ।
दासोऽस्मि दासोऽस्मि पदाब्जयोस्ते संसारघोरार्णवकर्णधार ॥२१८

गोपाल राधाधव भो मुकुन्द भक्तार्तिहारिन् भगवन्नमस्ते ।
श्रीराम गोविन्द मुकुन्द कृष्ण हे नाथ विष्णो भगवन्नमस्ते ॥

श्रीवल्लभानन्त जगन्निवास श्रीरामराजेन्द्र नमो नमस्ते ।
आयाहि पाहीति हरेऽच्युतेति श्रीराम रामेति हरेऽच्युतेति ॥२२०

श्रीकृष्ण कृष्णेति पुनः पुनश्च श्रीराम रामेति विरामहीनम् ।
उच्चैस्स्वरैर्वार्षिकभेकतुल्यकण्ठारवैर्नाम सदा पठद्भिः ॥ पू २२१

आम्रेडयद्भिर्हरिनाम दिव्यं सहस्तताळं कृतताण्डवैश्च ।
उत्साहयुक्तैः करणैस्त्रिभिश्च निद्रां च भुक्तिं तृणवद्विसृज्य ॥ २२२

श्रीरामनामाविरतं गृणद्भिस्त्यक्तान्यभावैः परितो वृतं त्वाम् ।
एते हि तुल्यव्यसनास्सखायो दृढाभिसन्ध्या सहितास्त्वयीश ॥

ग्रहीतुकामस्य च पृष्ठतो मे सहानुधावन्ति विलोकयेतः ।
सम्भूय रुद्ध्वा बहवस्समेत्य मुदाभिगच्छेम भवन्तमद्य ॥ २२४

मा प्रेमदाम्ना वलिताङ्घ्रिपद्मः क वा कथं कृष्ण पलायसेऽहो ।
किंवा मुधा धावनतोऽस्ति कार्यं गृहाण भक्त्यागि नमस्करोमि ॥

शृण्वन्मदीयां भणितिं निगूढां सपद्मनाभोऽभिनयंश्च भीतिं ।
आयान्तु भोश्शीघ्रमिहातिशीघ्रं गोपार्भकान् सत्वरमाजुहाव ॥

कृष्णानुरूपा बहवोऽर्भकाश्च तद्वेषभाषाकृतिनिर्विशेषाः ।
सहस्रदोषाच्चरशोभिवक्त्राः फुल्लाब्जनेत्रा धृतपीतवस्त्राः ॥ के २२७

श्रीशङ्खचक्रादिगदाविभूषास्सनाययुस्तत्र सहस्रशोऽथ ।
समागताः स्मो भगवन्मुरारे (ते) किङ्कराः किं करवाम कृष्ण ॥

(अत्याहितं किं कथयस्व कृष्ण
किं कृष्ण किं कृष्ण किमात्थ कृष्ण ।)
फणस्व भो कृष्ण तवानुधावकं
निरोधयामो वयमाशु लीलया ॥
किं हेमपूर्वः कशिपुर्दुराशयात्त्वां निवेषयत्यद्य जरासुतोऽथवा ॥
इत्यादितद्बालकजल्पितानि संरम्भसोल्लासविजृम्भितानि ।
श्रुत्वातिमात्रं भयकम्पिताङ्गस्तमेव कृष्णं शरणं ययासुः ॥ २३०
सर्वात्मनाभेदसुदुर्निरूपसहस्रसंख्याधिकबालकेषु ।
पीताम्बराभावविशेषहेतोः पृथग्विभान्तं जनिहीनबालम् ॥ २३१
विज्ञाय कृष्णं पदयोर्निपत्य प्रदक्षिणीकृत्य कृताञ्जलिस्सन् ।
स्तोतुं प्रवृत्तोऽस्मि तदाहमेवं हे कृष्ण हे यादव हे सखेति ॥२३२
प्रवेपमानो भयसम्भ्रमाभ्यां सगद्गदैर्वाग्विसरैस्समेतः ।
निध्याय भूयोपि कृताञ्जलिस्सन् तमम्बुजाक्षं पदयोर्निपत्य ॥२३३
यथा—
यो यज्ञशालार्हणकालकर्णशूलायिताळापविनोदशीलम् ।
सम्प्राप्तकालं शिशुपालमारात्सम्पालयामास कृपालुबालः ॥ २३४
सा मातृवत्सम्परिपालितासीन्नितान्तकौटिल्ययुतान्तरङ्गा ।
या पूतना हन्तुमुपाजगाम दयान्तरङ्गेण च रङ्गधाम्ना ॥ २३५
स पातु मां भापतिरच्युतो हरिस्सदैव दीनावनकर्मदीक्षितः ।
यो भक्तरक्षार्थमनेकशः पुरा कृतावतारो भगवान् स्वलीलया ॥

गद्यम्—अहो किमिदं भयभ्रान्त्या पश्यामि । अरे प्रत्यक्षं नहि नहि । समक्षं स्थितमपि नित्यापरोक्षमपि सर्वाध्यक्षमपि सर्वान्त-

र्यामिणं स्वात्मभूतं भगवन्तं भवन्तं पुरतः पश्यतापि विहाय यत्तच्छब्द-घटितपरोक्षेश्वरस्तुतिर्या गुरुमुखादधीताध्यात्मविद्येन मया क्रियते ॥

अलमलम् ॥

भगवन् शठधीरयं जनः प्रतिकूलाचरितं क्षमस्व मे ।
अयि दासजने कृतागसि प्रतिघां नो कुरुते हृदि प्रभुः ॥ २३७

स्वामिन् कृष्णाश्रितजनसख त्वां कृपालुं विदित्वा
यद्यन्मौग्ध्याद्तिपरिचयाद्धास्यवाक्यान्यगोचम् ।
सोढ्वा तन्मां चपलमसतामग्रगण्यं कृपायाः
पात्रं कृत्वाच्युत मुरहरे रक्ष रक्षाधुना त्वम् ॥ २३८

"दिशो न जाने न लभे च शर्म नमोऽस्तु ते देववर प्रसीद ।
नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भो कृष्ण नमो नमस्ते ॥
नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।
सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ॥
अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ।
यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ॥
पितासि लोकस्य चराचरस्य त्वमेव विश्वस्य परं निधानम् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥
तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम्" ॥

इत्यर्जुनोक्तीरनुसृत्य कृष्णं स्तुत्वा तमेकाकिनमेव सन्तम् ।
विलोक्य हृष्टो गतभीस्तु भूयस्सम्प्रार्थयन्कृष्णमवोचमेवम् ॥ २३९

यथा—

अयि केशव माधव प्रभोऽसुरघातिन्विकचाम्बुजेक्षण ।
गरुडध्वज पङ्कजासनप्रमुखाभिष्टुत विष्टरश्रवः ॥ २४०
कमलाप्रियवल्लभ प्रभो गजराजावनसम्भ्रमान्वित ।
महिमा तव वागगोचरो नहि वक्तुं प्रभवामि कृष्ण भोः ॥

ब्रह्मेन्द्राद्यैरमरनिकरैः प्रत्यहं पूजिताङ्घ्रिं
योगिध्येयं दहरकुहरे नीलमेघासिताङ्गम् ।
नादात्मत्वं स्वमुखमुरळीनादतो बोधयन्तं
त्वां राधेशं शरणमधुना वासुदेवं प्रपद्ये ॥ २४२

गद्यम्—इति नमस्कृत्य स्वामिन् आः विस्मृतं मया - त्वदनुधावनव्यग्रेण इदं विलोकय जवाद्धावतो भवतः पीताम्बरात् गलितोऽयं लेखासञ्चयो मम मध्येमार्गं सम्प्राप्तस्तन्न जानाति भवान् । मयैतावत्पर्यन्तं सुरक्षिता इमा लेखाः । किमाभिर्मम दासस्य राजकार्यविषयिणीभिर्लेखाभिस्संसाधनीयमस्ति । प्रभो दास्यामि । विलोकय । इति वदति मयि । आः विस्मृतं । अरे रे साधो लेखाः प्रयच्छ प्रयच्छ । इति मन्दं मन्दं मदन्तिकजुषि हृषीकेशे भगवति श्रीकृष्णे अतिवेलानन्दतुन्दिलहृदयोऽहं दामोदर भगवन् गोविन्द सन्दर्शयामि पश्यतु भवान् इति कक्षनिक्षिप्तं लेखासञ्चयमेकैकशो विभज्य पठितुं प्रवृत्तोऽस्मि । क्षणेन सर्वा अपि स्वयं पठित्वा ॥

विलोकयेमाश्शरणागतानां नृशंसकंसोद्भटपीडितानाम् ।
स्वधर्ममार्गे चरतां मुनीनां निवेदिका माधव गूढलेखाः ॥ २४३

(इति करे समर्प्य)

प्राग्जोतिषाधीश्वरदुष्टभौमावरोधरुद्धेन वधूगणेन ।
विलोकयेमाश्शरणागतेन सम्प्रेषिता माधव गूढलेखाः ॥ २४४

(इति करे समर्प्य)

प्रदित्सुना स्वीयकुमारिकाणां या सिन्धुराजेन हरे पुरा ते ।
स्वभृत्यमूलं विमलाह्वयेन सम्प्रेषितेयं प्रणयार्थलेखा ॥ २४५

(इति हस्ताब्जे समर्प्य)

विलोकयेमां बहिरङ्गलेखां स्वभृत्यमूलं प्रहितां पुरा ते ।
साम्यार्थिना पौण्ड्रकवासुदेवनाम्ना खलेनातिमदान्वितेन ॥ २४६

(इति हस्ते समर्प्य)

विलोकयेमां भगिनीं सुभद्रामुद्दिश्य पार्थेन यतीश्वरेण ।
मन्त्रोपदेशच्छलतो रहस्ये समर्पितां तां प्रणयार्थलेखाम् ॥ २४७

(इति करे निधाय)

अक्रूरमुख्यैर्मधुरस्वभावैस्त्वय्यर्पितान्तःकरणैस्सदैव ।
कंसाद्भिया गूढतरं चरद्भिस्सम्प्रेषिता माधव गूढलेखाः ॥ २४८

(इति पुनरपि हस्ते समर्प्य)

यां रुक्मिणी सोदरयत्नभीता दूतीमुखाद्गूढतरं पुरा ते ।
सम्प्रेषयामास रहस्यलेखां विलोकयेमां कमलापते त्वम् ॥ २४९

(इति करे न्यस्य)

विरोधसंसाधकगूढवृत्त्या कंसेन दौष्ट्यं चरितुं निगूढम् ।
यास्सज्जिता मर्मविधानवार्तास्तज्ज्ञापिका माधव गूढलेखाः ॥ २५०

लब्धाश्च तस्य प्रणिधेस्सकाशात्सम्पादिताश्चोद्धवमन्त्रिणा ते ।

गद्यम्—इत्यर्धपठिता लेखास्समाकृष्टा हठाद्भगवता । ततोऽहमेवं चेत्करोषि न दास्ये शिष्टा लेखाः । मार्गमध्ये मया लब्धा मदीया एव । सम्पूर्णं पठित्वा प्रदास्ये । इति हसन् हस्तमूर्ध्वमुत्क्षिप्य । रसभङ्गं मा कुरु । किमाभिर्मम । क्रमात्तवैत्र दास्ये । इति पुनः पठितुं प्रवृत्तोऽस्मि ॥

विमर्शनार्थं तव गूढलेखास्सम्प्रेषिता ह्युद्धवनामकेन ।
त्वत्कार्यसंसाधनसावधानधीशालिना नीतिविशारदेन ॥ २५१

कंसस्य पुर्यां धिषणस्य साक्षाच्छिष्येण गूढोद्धवसंयुतेन ।
त्वद्धर्षसंवर्धनचारवृत्त्या गूढाभिसन्ध्याचरितं यथैव ॥ २५२

उपायमालम्ब्य तृयीममेव कंसावरोधे चरतातिगूढम् ।
सम्पाद्य तत्रैव च वैमनस्यं कंसस्य दारेषु परस्परं च ॥ २५३

सुवज्रलेपं च विधाय वैरं तवानुकूल्यं बहु संविधाय ।
दारांश्च पुत्रांश्च कुमारिकाश्च त्वदीयपक्षाश्रयगान्विधाय ॥ २५४

अमात्यवर्गस्य च राज्ञि भेदं सम्पाद्य युक्त्या च निगूढमूलम् ।
सैन्याधिपानामपि राज्ञि वैरं युक्त्या निगूढं समुपार्जयित्वा ॥ २५५

अवार्यचातुर्यमहार्यधैर्यमालम्ब्य कार्यं विजयार्थिना ते ।
सम्प्रेषिता या बहुगूढवृत्तसंज्ञापिका तां शृणु वाचयामि ॥ २५६

यथा—

गद्यम्—स्वस्ति श्रीत्रिलोकविजयश्रीसमेतस्य श्रीबालगोपालपरब्रह्मणः पादपद्मयोः प्रणतिपुरस्सरं भवतः प्रणिधिः किञ्चिद्विज्ञापयति । अत्र सर्वं सुसंविहितं स्वामिकार्यम् । सिद्धं नस्समीहितम् ।

विशाखः कृतो वैरिजनः। केवलमत्र नाममात्रं तिष्ठति प्रभुरिति । अयमक्रूर इति सार्थकनामा प्रेषितः कंसेनापि परं विस्रम्भार्हः विशेषतश्चास्मासु भक्तिमान् । कंससंनिधानवर्तिषु बहुष्वयं महात्मा सात्त्विकोऽमायिकश्च। सर्वथाप्यत्रत्यरहस्यवृत्तनिधिप्राया लेखास्सन्देशाश्च युक्तिशालिनानेन बहुशस्समार्जिताः। तासु प्रतिलेखं परीक्ष्य निर्दुष्टैयमिति मन्नामाक्षरैस्संयोजितास्सर्वाः अरिपक्षसञ्जातैरपि स्वकार्यार्थमस्मत्पक्षपातितैश्चित्तप्रत्ययार्थं प्रेषितान्युपायनानि । तानि स्वीकर्तव्यान्यायुष्मता । युष्मत्तातपादा अपि विदितैतद्वृत्तान्ता नितान्तं मुदितान्तःकरणा एवासते । शोधितोऽयं कंसप्रणिधिर्न पुनश्शङ्कनीयः । वृत्तमिदमषट्कर्णं गोपनीयम् । तत्रत्याननुनीय सबलभद्रो भवानत्रागच्छतु द्वित्रिदिनव्यवधिना । कंसप्रहिताः केशिप्रमुखास्संमर्दिता एव भवता शिष्टा मुष्टिमेयास्तत्सहायाः । उभे हि निरूढवैरे चास्मासु जरासन्धदुहितरौ निरपत्ये तत्पक्षीयाः कतिचिदेव । शिष्टमक्रूरमुखादवगतं भवति भवतः। स हि सर्वं वक्ष्यति। राजकार्यमर्मज्ञोऽयं सर्वथा ऽपर्यनुयोज्यः। बलभद्रस्यापि नावेदनीयमामूलाग्रं। भवतः सर्वमवशिष्टं क्रमाद्व्यक्तं भविष्यति। इति भवत्कार्यसाधनोद्धवो विबुधविधेयश्चास्मि उद्धवः । श्री श्री श्री ।। इति मुद्रा ।।

उपायनानि यथा—

त्वन्मातुलानीभिरिदं पितुः कृतं विस्मृत्य चित्ते क्षमयागसां शतम् ।
भूयात्पतिर्मद्दुहितुर्भवानिति सम्प्रेषितान्येतदुपायनानि ।। २५७

स्वामिन् मातुलकन्याभिः प्रेषितानि विलोकय ।

गूढसन्देशपत्राणि स्वात्मार्पणपराण्यलम् ॥ २५८

स्वस्नेहदर्शनायेव सादरं प्रेषिता इमाः ।
सुगन्धतैलसम्पूर्णा भस्त्रिकाः कन्यकाजनैः ॥ २५९

कंसाग्रसुतयान्यग्राभिख्यया प्रेषितस्तव ।
न्यग्रोधमणिहारोऽयं कामुकानां मनोहरः ॥ २६०

कान्तिमत्याख्यया कंसजातया प्रेषितस्तव ।
खचितो हीरमणिभिर्हारः कान्तामनोहरः ॥ २६१

मातुलेय्या त्वयि महत्सौहार्दायत्तचित्तया ।
चन्द्रावळ्या चन्द्रहारः प्रेषितोऽयं महार्घकः ॥ २६२

मणिगात्र्याख्यया पुत्र्या मातुलस्य प्रियाय ते ।
हेमपात्रं तु सम्प्रीत्या प्रेषितं स्वीयगात्रवत् ॥ २६३

स्मरकेतननाम्न्यायं कंसपञ्चमकन्यया ।
गोमेधिकमणीहारः प्रेषितस्स्वाशयो यथा ॥ २६४

कंसवैमात्रेयजया विरजाभिख्यया स्वयम् ।
प्रेमभार इवायं ते तारहारस्समर्पितः ॥ २६५

कंसराजामात्यपुत्र्यः प्रेमोत्कण्ठातुरान्तराः ।
रत्नभूषोपहारांस्ते प्रेषयामासुरादरात् ॥ २६६

कंसस्ययास्सैन्यनाथतनया विनयान्विताः ।
महार्घवसनानि स्वमनांसीव ददुर्हि ताः ॥ २६७

गद्यम्—इति मदर्पितं लेखासञ्चयं पुनरपि स्वयं विलोकयन्तं प्रहृष्टस्वान्तं ममान्तिकस्थं भगवन्तं रमाकान्तं पदयोर्निपत्य ग्रहीतुकामे

मयि प्रहसन्नेव पुनर्लघु दुद्राव । अहमपि धावन्तं तमनुधावम् किन्ते मयापराद्धम् । हृदयगतं कथय । नैवं मां कर्तुमुचितमित्याक्रोशति मयि, अरे इति सम्बोध्य, परावृत्य, कैतवकोपातिरेकं प्रदर्शयन् :—

विसृज्य राधां दयितां मदीयां स्तुतास्त्वयादौ निखिलाश्च देवाः ।
या सर्वदेवावनताङ्घ्रिपद्मा पद्मालयाया अपि मूलमूर्तिः ॥ २६८

अतो मनः खिद्यति मे यतस्त्वया प्राणाधिका मे न हि राधिका स्तुता ।
भक्ष्याणि भोज्यानि न रोचते च मे प्राणप्रिया यन्न हि राधिका स्तुता ॥

स्तुता प्रिया मे न हि राधिका त्वया
भोक्ष्ये न भक्ष्याणि तवाहृतान्यहो ।

(इति तूष्णीं स्थिते कृष्णे)

वक्ष्येऽत्र तेऽहं गुरुशास्त्रयुक्तिभि-
र्युतं समाधिं शृणु राधिकेश भोः ॥ २७०

आचार्यगर्गादिमतानुरोधाच्छ्रीब्रह्मवैवर्तपुराणमानात् ।
अभेददृष्ट्या युवयोः पृथङ्नो राधा स्तुता कृष्ण न मेऽपराधः॥

समाधानप्रकारं ते दास्ये लिखितपूर्वकम् ।
साधवोऽत्र प्रमाणं मे गर्गश्रीनारदादयः ॥ २७२

समाधानप्रकारो यथा—

चन्द्रे दृष्टे चन्द्रिका दृष्टपूर्वा कृष्णे तुष्टे राधिका तुष्टपूर्वा ।
स्तोतुं नेशे नाहमन्योन्यमुक्त्या भेदं राधाकृष्णयोर्नैव वेद्मि ॥२७३

कुसुमामोदवत् श्लिष्टौ राधाकृष्णौ सनातनौ ।
शक्तिशक्तिमतोर्भेदो न दृष्टो नापि च श्रुतः ॥ २७४

तथा राधाकृष्णयोश्च भेदो दृष्टो न च श्रुतः ।
यथा मृद्भाण्डयोर्लोके पृथगानयनं न हि ॥ २७५

तथा कृष्णे स्तुते राधास्तुतिश्च सुकृता भवेत् ।
राधा हि गोकुलेशानान्न भिन्ना परमार्थतः ॥ २७६

तादात्म्यमनयोर्नित्यं वह्निदग्धृत्वयोरिव ।
राधा श्रीकृष्णविधुना न भिन्ना परमार्थतः ॥ २७७

मणिदीधितिर्न्यायापि वस्त्वैक्याद्युवयोर्मिथः * । (स्सदा)
कृष्णस्तोत्रे प्रवृत्तस्य श्लोकैस्सप्तशताधिकैः ॥ २७८

राधास्तुतिर्ह्यर्थसिद्धा भक्षितेक्षोर्यथा सिता ।
राधास्तुतिं पृथक्तस्मान्न कुर्वेऽभेददर्शनः ॥ २७९

अपृथक्सिद्धरूपत्वादपसिद्धान्तसम्भवात् ।
अविभाज्यस्वरूपत्वान्नापराधी भवाम्यहम् ॥ २८०

तथापि—

हृदये सन्निधत्तां मे राधा श्रीकृष्णमन्दिरे ।
कृष्णस्तु परमं ब्रह्म भगवान्सच्चिदात्मकः ॥ २८१

राधास्वाभिन्नमाया स्यचिच्छक्तिस्समुदीरिता ।
यत्र कृष्णस्तत्र राधासन्निधिस्सह जायते ॥ २८२

तथापि—

ग्रन्थादौ मङ्गळश्लोके श्रीराधा ह्यादितः स्तुता ।

---

*त्वं यादृशोऽसि भगवन्नयि तादृशीं ते राधां वदन्ति युवयोर्न तु भेदगन्धः । मायाविभक्तयुवतितनुमेकमेव त्वां मातरं च पितरं च युवानमाहुः ॥ इति साधूक्तिमनुसृत्य, ज्योत्स्नेव हिमदीधितेरिति दृष्टान्तानुसारेण च प्रभाश्रयस्य प्रभामयत्वव्यपदेशवत् स्वरूपभेदाविरोधेनायं निर्वाह्यः ॥

किं न जानासि गोविन्द परिहासं करोषि वा ॥ २८३

इत्येतद्राधिकाकृष्णाभेदभावप्रसाधिकाम् ।
पठित्वा पत्रिकां कृष्णे हसित्वा गन्तुमुद्यते ॥ २८४

सोऽप्रासवाक्यैराहूय भगवन्तमथाब्रवम् ।
राधावधूमनोनाथ राधाकृष्ण क धावसि ॥ इति २८५

तदाहं मन्दमन्दं जिगमिषुं भगवन्तं निरुध्य । वृथैव स्वानुचरमाकुलीकृत्य अभियोगस्य प्रत्यभियोगमिति न्यायेन यत्किमपि वदसि । निपुणतरं सुदीर्घं विचारयतापि मया न किमप्यपराद्धम् । कौस्तुभोरस्कस्य तव हृदयं शिलासममभवत् । इतः परमाशुतोषं पार्वतीपतिमाश्रयामि । स हि भक्तरक्षार्थं गरलमपि पपौ । त्वं हि मधुरभक्षणेऽप्युपेक्षामावहसे । त्वं हि श्रीमान् । अहमकिञ्चनः । कन्थाधारिणः कर्पटधारी गतिर्भवतु । तमेव शरणं गच्छामि । तथापि चिरसौहृदं बाधते । इयमन्तिमा प्रार्थना । इति वदन् करभस्त्रिकात-श्चत्वारि मधुलिकुचफलानि करे गृहीत्वा ॥

प्रेमासार ( पयोधरा ) वलाहका प्रियतमा सम्प्रेषयामास सा
राधा स्वीयमनोरथार्पणकृते चैतानि ते कौतुकात् ।
कल्याणी तव रुक्मिणी सुगुणभूस्सम्प्रेषयामास सा
प्रेम्णा स्वादुमधूककण्टकिफलान्येतानि गूढाशया ॥ २८६

सत्या नित्यरसार्द्रभावरसिका सम्प्रेषयामास सा
पानार्हानपि नारिकेलनिचयान्खर्जूरमध्वासवान् ।
कालिन्दी कदलीकपित्थबदरीजम्बूफलान्यादरा-
द्भद्रा शुभ्रदधीन्यदभ्रदयया स्थित्वाधुना गृह्यताम् ॥ २८७

सम्प्रार्थये श्यामलदेह भद्रां श्रीगन्धचर्चाविधये तवाहम् ।
संयोजये दिव्यतनोर्महार्घैस्सत्यां तवालङ्करणाय विष्णो ॥ २८८

नियोजये दिव्यसुमैश्च रुक्मिणीं प्रसाधनार्थं तव गोपबालक ।
समानये गोपवधूगणं प्रभो कर्पूरवीटीं तव दातुमद्य भोः ॥ २८९

आकारये देवगणं तवेश दिव्योपचारान्विदधातुमद्य ।

अथवा —

करोमि शक्त्या सकलोपचारानहं स्वयं स्वीकुरु बालकृष्ण ॥ २९०

गोलोकसुन्दरीर्भोक्तुमाह्वयामि त्वया सह ।
श्वेतद्वीपाङ्गनावृन्दमाह्वयामि श्रिया सह ॥ २९१

भूमिव्रजाङ्गनावृन्दमाह्वयामि त्वया सह ।
भैष्मीं सर्ववधूराज्ञीमाह्वयामि त्वया सह ॥ २९२

गोपालबालिकास्सर्वाश्चाह्वयामि व्रजस्थिताः ।
सग्धिस्सप्रीतिस्ताभिस्ते परमानन्ददायिनी ॥ २९३

गोपालबालकान् सर्वानाह्वयामि सखींस्तव ।
यैस्सार्धं यमुनानद्यां पुरा सग्धिस्त्वया कृता ॥ २९४

अधुनापि तथा कृष्ण कुरु तृप्तो भवाम्यहम् ।
भक्तवांछापूरणं ते स्वधर्मः खलु माधव ॥ २९५

गद्यम्—इति मञ्जुलार्थपेशलानि श्रवणसुभगानि सहासनर्मवचनानि शृण्वन् पञ्चास्यकिशोर इव स वल्लवीकिशोरः ग्रीवाभङ्गाभिरामं विवृत्तवदनारविन्दस्सन्मन्दीकृतगमनवेगो यदा समजनि तदाह— "न साहसमनारुह्य नरो भद्राणि पश्यति" इति न्यायात् सरभसं सप्रश्रयं साञ्जलिबन्धं :—

तिष्ठ मा धाव गोविन्द शपेऽहमधिरुक्मिणीम् ।
तिष्ठ मा धाव गोविन्द शपेऽहमधिनारदम् ॥ २९६

तिष्ठ मा धाव भो स्वामिन्नधिगोपीगणं शपे ॥
तिष्ठ मा धाव गोविन्द शपेऽहमधिराधिकाम् ॥ २९७

गद्यम्—इति मच्छपथोक्तिश्रवणमात्रादेव मन्त्रौषधिरुद्धवीर्यो भोगीव स गोपीवल्लभः स्तब्धो बभूव । पदमेकमपि न चचाल । तदा साष्टाङ्गपातं त्रिवारं प्रणम्य सप्रश्रयं साञ्जलिबन्धं पुरतः स्थिते मयि प्रेमप्रसन्नया गिरा वत्स मा भैषीः कृतार्थोऽसीति मन्दस्मितसुन्दरवदनारविन्दस्स गोविन्दः प्रेमप्रसन्नमधुरैः कटाक्षैर्मां लक्ष्मीचकार ॥ तदानीमहम् :—

दिग्देशकालसामान्यविशेषरहिते त्वयि ।
अन्तर्बहिः पूर्वपश्चादिति भेदो विडम्बना ॥ २९८

पृष्ठसन्दर्शनं वास्तु मुखसन्दर्शनं तव ।
गङ्गानद्यां हि स्निग्धासोस्तटभेदो न चार्थदः ॥ २९९

सर्वार्थसाधकं यस्य नाम स्यात्तस्य चक्रिणः ।
साक्षात्सन्दर्शने किं वा साध्यमस्ति मम प्रभो ॥ ३००

आनन्दामृतसर्वस्वं मधुराकृतिमव्ययम् ।
आलिङ्गितुं त्वामिच्छामि स्वामिन्नङ्गीकुरु प्रभो ॥ ३०१

गद्यम्—इति सप्रश्रयप्रेमगद्गदं भाषमाणः तं त्रिभुवनसुन्दराकारमिन्दिरारमणं गाढमालिङ्ग्य सकलभुवननिर्माणमायाकरण्डायमानं सगुणनिगूढबहुकायव्यूहप्ररोहमूलकन्दायमानं बहुभवनसाधनमप्राकृत -

दिव्यमङ्गळविग्रहं मत्करतलस्थितेन प्रत्नपीताम्बरेणालङ्कृत्य पुनःपुनः परिरभ्य तदीयसुखतरस्पर्शनेन निवृत्तानुधावनश्रमः प्राप्तनागायुतबलः आनन्दातिरेकेण मुकुळितकरकमलयुगळस्सन् ॥

"धेनुपालदयितास्तनस्थलीधन्यकुङ्कुमसनाथकान्तये ।
वेणुगीतिगतिमूलवेधसे तेजसे तदिदमों नमो नमः ॥

तेजसेऽस्तु नमो लोकपालिने धेनुपालिने ।
राधापयोधरोत्तुङ्गशायिने शेषशायिने ॥

केयं कान्तिः केशव त्वन्मुखेन्दोः कोऽयं वेषः कापि वाचामभूमिः ।
सेयं सेयं स्वादुतामञ्जुलश्रीर्भूयो भूयो भूयशस्त्वां नमामि" ॥

गद्यम्—इति महाभक्तलीलाशुकवाग्भिरभिष्टूय भगवतो बाल-गोपालस्य सकललोकभद्रङ्करौ करौ स्वकराभ्यां गाढमवलम्ब्य अमृत-करसम्पर्कवशादानन्दातिरेकेगाधनिमीलितनेत्रः यत्किमपि मनसि निध्याय संस्तम्भितसर्वकरणो यथाकथञ्चिल्लब्धस्मृतिः भगवति न्यस्त सर्वात्मभावः गण्डौ परिचुम्ब्य शिरस्समाघ्राय संयतैस्त्रिकरणैस्तदीय-श्रीमूर्तिसौन्दर्यमनुभूयाप्यलब्धाशापारः—

अधरामृतलुब्धवल्लवीजनसंमोहनदक्षमक्षयम् ।
मधुरापुरमध्यसंस्फुरन्मधुराद्वैतमुपास्महे महः ॥ ३०२

इति प्रस्तुत्य भूयो भूयः प्रदक्षिणीकृत्य पादौ गृहीत्वा निर्वि-कल्पसमाधाविव प्राप्तधीलयः पुनः पुनर्लब्धस्मृतिः भगवतः पुरतः

स्थित्वा स्वकरतलस्थितं समस्तं भक्ष्यप्रकरं समर्पयितुमुद्युक्तस्सन्नेवं कर्तुं प्रवृत्तोऽस्मि ॥

राधामनोनाथपथानुधावनाभिधानके माधवलाभरूपः।
आश्वासवर्यो हि तृतीय एवं पीताम्बरालङ्करणेन पूर्णः ॥ ३०३

इति श्रीमदुमारमणकरुणासमासादितानवद्यहृद्यमृदुपद्यकविताभूषणस्य श्रीनन्दनन्दनपदारविन्दभजनानन्दतुन्दिलहृदयस्य वरिवस्यापरितोषितसाधुबृन्दस्य काञ्चीकामकोटियतिराडास्थानविद्वन्मण्डलीकिङ्करस्य काञ्चीमण्डलमण्डनायमानकाकवाकाग्रहाराभिजनस्य पञ्चद्राविडान्तर्विभागभूतान्ध्रभूसुरवंशसंजातस्य वेगिनाडुसंज्ञकान्तश्शाखामाहितस्य स्मार्ताचारसम्प्रदायवर्तनस्य आत्रेयगोत्रसम्भूतस्य श्रीवेङ्कटकृष्णश्रौति, सुब्बलक्ष्म्यम्बापुत्रस्य सौजन्यसौशील्यादिगुणगणभूषिताया जानकीनाम्न्यास्सीमन्तिन्याः प्रियभर्तुः श्रीकृष्णाभिधानस्य कवेः कृतिषु भगवदनुधावनाभिधाने विचित्रकथासंविधाने प्रबन्धे पीताम्बरार्पणहृष्ट श्रीमाधवलाभरूपः तृतीयाश्वासः ॥

श्रीराधामाधवः प्रीयताम् ॥

॥ श्रीकामाक्षीदेव्यै नमः ॥

# ॥ अथ चतुर्थाश्वासः ॥



श्रीदक्षिणामूर्तिगुरुस्वरूप श्रीकामकोटीश गुरो नमस्ते ।
सदैव सच्छिष्यसमावृतोऽपि कर्णावतंसीकुरु मे च वाणीम् ॥ १

सद्धर्मसंरक्षणजागरूक गुरुप्रवेकास्तु नमश्शतं ते ।
श्रीबालगोपालपदानुषक्तां सुधां स्रवन्तीं शृणु मे सुसूक्तिम् ॥ २

श्रीबालगोपालविलासनाम्नि ज्ञानप्रदे भक्तिरसप्रधाने ।
राधामनोनाथकथाप्रबन्धे चतुर्थमाश्वासमिमं शृणु त्वम् ॥ ३

तदाहम्—

अनङ्गजनक त्रस्तहरिणीशावकाम्बक ।
सर्वाङ्गपूजां ते कुर्वे स्वामिन्नङ्गीकुरु प्रभो ॥ ४

यथा—

श्यामन्तिकावकुलचम्पकपाटलाब्जजाजीरसालकरवीरतमालपुष्पैः ।
बिल्वप्रवाळतुलसीदळमल्लिकाभिस्त्वां पूजयामि मधुसूदन गोप कृष्ण ॥

पादावनतनाकेश पादौ ते पूजयाम्यहम् ।
अघासुरारे गोपाल जङ्घे ते पूजयाम्यहम् ॥ ६

श्रीराधाभामिनीजाने जानुनी पूजयामि ते ।
अग्राह्याद्भुतरूपस्य गुह्यं ते पूजयाम्यहम् ॥ ७

## चतुर्थाश्वासः

पद्मनाभ नमस्तुभ्यं नाभिं ते पूजयाम्यहम् ।
कुक्षिस्थाखिललोकेश कुक्षिं ते पूजयाम्यहम् ॥

लक्ष्मीवक्षस्स्थल स्वामिन् वक्षस्ते पूजयाम्यहम् ।
चक्रहस्त नमस्तेऽस्तु हस्तांस्ते पूजयाम्यहम् ॥

कम्बुकण्ठ हरे स्वामिन्कण्ठं ते पूजयाम्यहम् ।
सप्ताहमखसन्तुष्ट मुखं ते पूजयाम्यहम् ॥

आसेचनकवक्त्राब्ज वक्त्रं ते पूजयाम्यहम् ।
केशवाय नमस्तुभ्यं नासिकां पूजयाम्यहम् ॥

सर्वलोकविधातुस्ते नेत्रे सम्पूजयाम्यहम् ।
शिशुपालशिरश्छेत्तुः श्रोत्रे ते पूजयाम्यहम् ॥

स्वामिन्वेदशिरोवेद्य शिरस्ते पूजयाम्यहम् ।
सर्वाण्यङ्गानि सर्वेश पुनस्ते पूजयाम्यहम् ॥

नाहमष्टोत्तरशतसहस्रैः पूजयामि भोः ।
विलम्बो भवति स्वामिन्भक्षणे भक्ष्यसंहतेः ॥

धूपं दीपं (इत्यर्थोक्तौ) न नष्टा शास्त्रवासना ।
धृतपीताम्बरस्येयं माया विश्वविमोहिनी ॥

सम्प्राप्ते भोजने का वा चिन्ता लाङ्गलचोदने ।
मार्जय त्वं बाधितानुवृत्तिं चित्तमर्षी विभो ॥

नैवेद्यं हृद्यमद्याहमर्पये द्युसदां पते ।

यथा—

रुक्मिणीवल्लभ स्वामिंस्तिन्त्रिणीरसमिश्रितम् ॥ १७

पाचितं पाकनिपुणैस्तिलचूर्णसमन्वितम् ।
मिश्रितं कृतसंस्कारैर्हिङ्गुजीरमरीचकैः ॥ १८

ओदनं भुङ्क्ष्व मोदाय सादरेण मयाहृतम् ।
लम्बालकैर्गोपबालैर्वेणुगोपाल माधव ॥ १९

अयातयामं भोज्योष्णं सामोदमधुरं बहु ।
अन्नं भक्ष्यफलोपेतं भुङ्क्ष्वाधोक्षज मामकम् ॥ २०

कौमोदकीधर स्वामिन्मोदकान्यपि खाद भोः ।
नानाविधानि भक्ष्याणि कटुक्षारयुतान्यपि ॥ २१

ओंकारवेद्य भो स्वामिन्नोदनं दधिमिश्रितम् ।
हिङ्गुजीरार्द्रकोपेतं तैलसर्षपसंस्कृतम् ॥ २२

दशावतार दंशेमानुपदंशान्बहून्प्रभो ।
आम्रनारङ्गलिकुचामलकैस्सुशलाटुभिः ॥ २३

तैलसर्षपसंस्कारैः साधितान्माहितानपि ।
लिकुचानां रसैःसम्यग्भावितानार्द्रकानपि ॥ २४

पुण्डरीकेक्षण स्वामिन्निक्षुखण्डानि भक्षय ।
यथेष्टं भुङ्क्ष्व खर्जूरफलमर्जुनसत्सख ॥ २५

क्षीरोदशायिन् श्रीकान्त गोक्षीरं पिब सादरम् ।
इङ्गालवह्निकथितं शर्करैलादिमिश्रितम् ॥ २६

आपदुद्धारक स्वामिन्दधि भुङ्क्ष्व यथासुखम् ।

मधूनि भक्षय स्वामिन्मधूकानि यथारुचि ॥ २७
भुङ्क्ष्व त्वं कण्टकिफलं लोककण्टकशिक्षक ॥
मधूनि लिकुचानि त्वं मधुरानाथ भक्षय ॥ २८
तार्क्ष्यवाह कुरु स्वामिन्द्राक्षादिफलभक्षणम् ।
भो पार्थसारथे स्वामिन् कपित्थफलभक्षणम् ॥ २९
अम्बुजेक्षण भो भुङ्क्ष्व स्वामिन् जाम्बवतीप्रिय ।
जम्बूफलानि पक्वानि शार्णीडोलाधृतान्यलम् ॥ ३०
कपिकम्पितशाखाभ्यः पतितानि तरोरधः ।
कुरु मानवसिंह त्वमनासफलभक्षणम् ॥ ३१
वल्लवीकामिनीस्वामिन्दाडिमीफलभक्षणम् ।
कालीयमर्दन स्वामिन्कदलीफलभक्षणम् ॥ ३२
राधाबिम्बाधरासक्त खाद बिम्बफलान्यलम् ।
कालिन्दीकेलिलोल त्वं नारिकेळानि भक्षय ॥ ३३
उर्वारुकानि खाद त्वं भार्गवीप्रियवल्लभ ।
चाणूरमर्दन स्वामिन्मूलाख्यचणकान्यलम् ॥ ३४
आस्फोट्य दास्ये भुङ्क्ष्व त्वं यावत्तृप्तिर्भविष्यति ।
साधुसंरक्षक स्वामिन्मृद्वीकासम्भवं मधु ॥ ३५
पिब त्वं मधुरानाथ मधूककुसुमोद्भवम् ।
दध्यादिव्यञ्जनैश्चिञ्चामरीच्येलादिभिस्तथा ॥ ३६
गुडादिमधुरद्रव्यैर्यथायोगं विधानतः ।
श्रद्धया पाकनिपुणैः कृतोऽयं षाडबो रसः ॥ ३७

पिबाद्य बहुदार त्वमायुर्बलविवर्धनम् ।
सत्यभामाधव विभो पिबाम्बु मधुशीतलम् । ३८

एलोशीरलवङ्गाद्यैर्वासितं यामुनं शुचि ।
तक्रं भ्रिकृतपीयूषं चक्रधारिन् पिबाऽऽगळम् ॥ ३९

शर्करामिश्रितं वाथ जम्बीररसमिश्रितम् ।
हिङ्गूमरीचिकाजीरैस्संस्कृतं पाकविक्रमैः ॥ ४०

यत्पानेनाजीर्णशङ्का नातिभुक्तेऽपि जायते ।
"यथेष्टं वद माभैषीरन्ते नारायणं स्मर ॥ ४१

यथेष्टं भुङ्क्ष्व माभैषीस्तक्रं सलवणं पिब ।"
पत्रं पुष्पं फलं तोयं यो भक्त्याते प्रयच्छति ॥ ४२

तदेवालं तव स्वामिन्यत्किञ्चिद्वामृतोपमम् ।
तदेवालं तव स्वामिंस्तृप्तो भव जगत्पते ॥ ४३

तादृक् किं ते दृढा भक्तिरस्तीति यदि पृच्छसि ।
सर्वान्तरात्मन् जानीषे त्वमेव मधुसूदन ॥ ४४

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
द्रव्यदेहात्मजान्सर्वानपराधान्मया कृतान् ॥ ४५

प्रदक्षिणैः स्तुतिपदैः क्षमस्व मधुसूदन ।
अव्याजकरुणासिन्धो बालगोपाल माधव ॥ ४६

गद्यम्— इति सम्प्रार्थयमाने मयि अत्रान्तरे मम धर्मपत्नी मत्तः श्रुतधृतभगवदाशया भगवति न्यस्तसर्वात्मभावा प्रतिदिनमनुगीयमान-तरङ्गाष्टपदीपाठपरायणा भक्तिप्रबोधकान्ध्रभाषामयेमुव्वगोपालपदगीति-

गानचतुरा कुतोऽपि श्रुतैतद्वृत्तान्ता प्रमुदितांतःकरणा चतुर्भिर्दौहित्रैरनुगता कक्षविधृतदौहित्री दुहित्रा जामात्रा च सह त्वरिततरं धावन्ती विश्लथत्कवरीभरं श्लथन्नीवीबन्धं स्वेदक्लिन्नललाटा हर्षसंभ्रमपरीता तत्स्थलं समाजगाम, सह स्वानुजैरनुजया च ॥

अथ च विदितैतद्वृत्तान्तः श्रद्धाभक्तिपरायणो नारायणाख्यो मातुलेयो मम सम्बन्धी च बहुभिरनुगैर्बन्धुमित्रकलत्रपरिवारैस्सह मम साह्यं कर्तुं शकटेन कदलीफलानि कदलीपर्णानि विविधानि च फलानि समानयन् भोः समागतोऽस्मि किं तवात्रापेक्षितं भृशं वद क्षणादानेष्यामीति कथयन् भगवद्दर्शनलालसस्ससंभ्रमं समाययौ। कर्णाकर्णिकया श्रुतैतद्वृत्तान्तः मम भ्रातुष्पुत्रस्तत्र समागतः। भगवदाराधने मम साह्यं कर्तुं सह मात्रा पत्न्या सोदर्या पितृभगिनीभ्यां च। अपरश्च तथा मम मातुलेयः श्रुतैतद्वृत्तान्तः पुत्रमित्रकलत्रादिभिः ज्येष्ठभगिन्या च परिवृतः मृदङ्गतालधारी हरिभजनकुतूहली देशभाषामयीभिः "कण्णा वाडा कण्मणिये ओडादे ओळियादे" इत्यादिभिः गीतिभिरेतत्प्रबन्धसम्बन्धार्थगर्भिणीभिः उच्चैर्भगवन्तं सङ्कीर्तयन् समाययौ।

तथैव विदितैतद्वृत्तान्तो मद्भ्रातुर्जामाता सुब्रह्मण्याभिधो विबुधप्रवेकोऽपि साकं मात्रा पित्रा च समागतः सर्वानपि बन्धून् समावेश्य रक्षोघ्नैः पावमानैः वैष्णवैश्च सूक्तैर्भगवन्तमुपतस्थे।

यथा—

आदौ पुरुषसूक्तेन सूक्ताभ्यां च श्रियो भुवः।
आपोहिष्ठेत्यादिकाभिर्विष्णोर्नुकमिति क्रमात्॥ ४७

सूक्तत्रयेणापि हरिं तुष्टुवुर्मम बान्धवाः । ४८
परोमात्राय इत्यादिसूक्ताभ्यामपि केचन ॥
अस्य वामस्येति वर्गैर्दशभिस्तुष्टुवुः परे ।
पवमानैः कोऽयमात्मेत्यादिऋग्भिस्तथास्तुवन् ॥ ४९
नासदीयेन सूक्तेन ब्राह्मणेनापि केचन ।
हिरण्यशृङ्गानुवाकैः पवमानाख्यतस्ततः ॥ ५०
केदमभ्रं निविशतेत्यादिमन्त्रैश्च तुष्टुवुः ।
स्वर्णघर्मानुवाकेन चोंतद्ब्रह्मेति मन्त्रतः ॥ ५१
विष्णोः क्रमोऽसीति मन्त्रैः शन्नोमित्र इतीश्वरम् ।
सहस्रशीर्षं देवमिति मन्त्रैश्च तुष्टुवुः ॥ ५२
बृहद्रथन्तराभ्यां च यज्ञायज्ञीयसामतः ।
त्रिवृद्वैराजनाभ्यां च वारवन्तीयसामतः ॥ ५३
वैरूपेण तथा साम्ना शक्वरेणापि तुष्टुवुः ।
गीतोपनिषदा केचित् केचिन्नाम्नां सहस्रकैः ॥ ५४
महानारायणेनापि तुष्टुवुस्तैत्तिरीयकैः ।
ऐतरेयोपनिषदा भक्तिश्रद्धासमन्विताः ॥ ५

तथा—

तथैव च श्रुतैतद्वृत्तान्ताः परिसरग्रामवासिनो बहवः आचण्डालमाबालगोपालं सङ्घीभूय "हरे राम हरे राम" "इति हरिनारायण हरिनारायण" इति "रघुपतिराघवराजाराम - सीताराम - सीताराम" मित्यादि उच्चैर्बहुभिः प्रकारैः हरिनामानि पठन्तः काकतालीययोगमिमं महासुकृतलभ्यं सन्निवेशं लब्ध्वा प्रहृष्टाः भगवन्तं तुष्टुवुः । तस्मिन्नवसरे मद्भ्रातृ-

पुत्रजामातृस्यालकसम्बन्धिवर्गा महोत्साहाः स्थलशुद्धिं कृत्वा भगवतो भगवदनुचराणामयुतानां गोपालबालकानां च अभ्यवहारार्थं विशाल-कदलीदळान्यच्छिन्नाग्राणि भोजनभाजनानि वलयाकारेण प्रकल्पयामासुः । ततश्च मज्जायाप्रधानाः कुटुम्बनार्यः अतिवेलकुतूहलाक्रान्त-चित्ताः श्रीराम जयरामेति प्रगायन्त्यः पात्राभिघारपुरस्सरं सोत्कण्ठाः पञ्चषैरेव निमेषैः मया संभृतमुपनीतञ्च भक्ष्यभोज्यलेह्यचोष्यपानी-यादिकं फलानि च विविधानि सर्वं परिवेषयांचक्रुः । तदानीं :—

श्लो॥ "ब्रह्मार्पणं ब्रह्महविः ब्रह्माग्नौ ब्रह्मणा हुतम्"

इति वादिनि साह्लादं मयि भोक्तुं प्रचक्रमे ।
वलयाकारगोपालबालमण्डलमध्यगः ॥ ५६

यथेष्टावर्तनाविधाभ्रमणासनसंस्थितः ।
पीताम्बरोपरिन्यस्तवेणुवेत्रविषाणकः ॥ ५७

स्वाङ्गुळीविवरन्यस्तभुक्तशेषफलादनः ।
व्याघ्रसिंहादिनादानुकारिभीषणनिस्वनैः ॥ ५८

बालकान्भीषयन्कृष्णः पलायनपरायणान् ।
धिङ्मूढा विप्रलब्धाः स्थ सिंहो व्याघ्रो न चागतः ॥ ५९

आभीरशब्दो युष्मासु सार्थोऽभूदिति तान्हसन् ।
लीलाः कुर्वन्सं बुभुजे बालवेषधरो हरिः ॥ ६०

तदानीं भर्जितमुद्गसूपराशिमहिते प्राज्याज्यधाराप्रवाहे शर्कराक्षो-दसिकतांचिते पायसापूपसम्पन्ने कलमान्नपूर्णे द्राक्षागोक्षीरक्षौद्रपुण्ड्रेक्षु-खण्डमण्डिते रम्भानारिकेलफलपाकशाकसाकल्यकल्ये षाडबरसावली-पानकप्रचुरे शरच्चन्द्रचन्द्रिकाधवलदधिसमृद्धे कर्पूरैलाचन्दनोशीरलवङ्ग-

जाजीकेतकीपाटलीकुसुमसुरभिळपानीयसंमानिते सम्प्रवर्तमाने भोजन-महोत्सवे सम्भ्रमोत्साहसंयुताः परिवेषकाः प्रश्रयावनतास्सन्तः फलपात्रहस्ताः ईशोपनिषदित्यादिभिर्देशभाषाछन्दोभिस्स्वयं भगवन्त-मेवमर्थयामासुः ॥

यथा—सीसमालिका

ईशोपनिषदाख्यदाडिमीफलमिदमुत्कृत्य दास्ये गृहाण कृष्ण ।
केनोपनिषदनासाख्यफलान्यलं भक्षयाधोक्षज बालकृष्ण ॥
कठवल्यभिधचूतफलचूषणं कुरु शेषशायिन् गोपबालकृष्ण ।
प्रश्नोपनिषदाख्यमधुलिकुचान्यलं भक्षय बालगोपालकृष्ण ॥
मुण्डोपनिषदाख्यबिम्बफलान्यलं गोपबालैस्सह खाद कृष्ण ।
माण्डूक्यनारिकेळं खाद कारिकाशर्करामिश्रितं बालकृष्ण ॥
तैत्तिरीयाभिधमधुमधूकान्यलमत्तु भवान्दैत्यहरण कृष्ण ।
ऐतरेयाह्वयोर्वारुकफलवर्गभक्षणं कुरु हरे बालकृष्ण ॥
छान्दोग्यनामककण्टकीफलमिदमद भक्तसङ्कटहरण कृष्ण ।
(खाद बृहदारण्यकोपनिषन्नाममूलाख्यचणकानि बालकृष्ण ।)
खाद बृहदारण्यमूलचणकान्यलमास्फोट्य दास्ये गृहाण कृष्ण ॥
भाष्यवर्गाभिधायसयन्त्रनिहितव्याससूत्रेक्षुखंडनिष्पेषलब्ध ।
तीव्रमोक्षेच्छुधीच्छषकगृहीतब्रह्मतत्वामृतं पिब बालकृष्ण ॥ ६१

ते. गी.—युष्मदवतारगाधामरन्दधारपूरभागवताख्यदुग्धाब्धिलब्ध ।
ज्ञानवैराग्यभक्तिसुधां ददामि पाययाभीरबालकानपि पिब त्वम् ॥

श्लो ॥ सूपं स्वीकुरु भक्षयाशु भगवञ्शाकान्पिबाज्यं भृशं
खाद स्वानुचरैश्च मोदकचयाल्लेह्यं च चोष्यं तथा ।

पानीयं पिब नारिकेलसलिलं खर्जूरद्राक्षासवा-
नेवं तं बलभद्रसंयुतहरिं पप्रच्छुरस्मत्स्त्रियः ॥ ६३

दौहित्रा व्यजनैश्च गोपसहितं तं वीजयन्ति स्म मे
जामाता धवलातपत्रमुकुरे धृत्वा सिषेवे हरिम्
सम्बन्धी च सुगन्धिचन्दनलसत्ताम्बूलहस्तोऽभजत्
सर्वे बन्धुजना नतिस्तुतिपदैस्तं तुष्टुवुर्भक्तितः ॥ ६४

ननृतुर्बालिकाः काश्चित् नग्निकाश्चाविवाहिताः ।
पुरस्तान्मुग्धगोपालपदैश्च श्रीहरेर्मुदे ॥ ६५

कृष्णावतारसमयदेवतासंस्तुतिं शुभाम् ।
ब्रह्मस्तवं पठन्नुच्चैः संस्थितोऽहं तदन्तिके ॥ ६६

(एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रींल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥)
गृणन्निति प्रहृष्टोऽहं सर्वान्तर्यामिणं हरिम् ।
गोपालवर्ष्मणा छन्नं परंब्रह्माणमव्ययम् ॥ ६७

गद्यम्—अथ मत्स्तुतीः शृण्वन्नेव स मायामाणवको हरिस्सह गोपालबालकैस्सर्वाणि भक्ष्याणि भुक्त्वा पानीयं निपीय फलान्युपभुज्य सहस्तताळं ताण्डवं कुर्वन् मदीयचेलाञ्चलमाकृष्य स्वमुखमुदरं हस्तपादौ च मार्जयन् सस्मितं मार्ष्टुकामे मयि मत्करतलाच्चेलाञ्चलमाकृष्य पुनरापादचूडं स्वयमेव मार्जयन् पुनरपि पीताम्बरं दृढं परिधाय मद्गळं कराभ्यां गाढमालम्ब्य स्कन्धमारुह्य 'वत्स श्रान्तोऽसि सुदूरधावनेन। अस्तु। किमहं भक्तपराधीनः? किमहं निर्घृणः? किमहं भीरुः? किमहं धीरः? किं त्वमिदानीमुद्धवः? आहोस्विन्नारदः? अपि वा

सुदामा ? अथवा पार्थः ? आहोस्विद्व्यासस्तत्त्ववादी ? अथवा वन्दी । किमहं साक्षी ? किमहं निर्गुणः ? किमहं सगुणः ? किं वा उभयविधः ? किं वानुभयविधः ? निपुणोऽसि देवतापारम्यनिर्णये । पण्डितोऽसि । वेत्सि सकलानागमानितिहासान्पुराणानि च । किंच मत्तत्त्वावेदने शुकमहर्षिः शुकप्रायस्ते प्रतिभाति । मन्दाक्षवलिता तत्रभवती श्रुतिरपि मत्तत्त्वं तवावेदयितुं न पारयतीत्यवादीः किल । सदा मन्नामप्रभावावेदके जगद्देशिके नारदेऽप्यनादरेव ते वचनरीतिः प्रतिभाति । किमु तच्छात्रे प्रह्लादे । सर्वथा मत्तत्त्वं मत्त एव ज्ञातुं वाञ्छसि । मत्तत्त्वं मया प्रोक्तमपि ज्ञातुं त्वं नैव शक्नोषि । शृणु—

गद्यम्— *अरे मुक्तप्रायस्यापि सरूपनष्टचित्तासोरऽपि वासनालवानुवर्तनात् व्यवहारकाले मत्तस्सुतरां विलक्षणस्य तव कल्पितदेशकालकृतज्ञातृज्ञेयप्राप्यप्रापकभावाद्यनेकविधभेदाभाससहितस्य 'तदिदं तादृशमीदृशमेतावत्तावदिति च यन्न भवेत् ब्रह्म तदित्यवधेयम्' इति वाक्यानुरोधेन मम स्वरूपं ज्ञातुं परमार्थतो दुश्शकमेव । अतत्स्वभा-

* कलाविदानीं तीव्रतपोयोगसमाधिमहितानामुत्तमाधिकारिणां विरळत्वात् मध्यमाधिकारिणामेव बहुळत्वात् तादृशमेव स्वभक्तं निमित्तीकृत्य भगवानत्र ब्रूते:— अरे मुक्तप्रायस्यापीत्यादि । संसारदशायां परमात्मनो भिन्न एव जीवः । स व्यवहारकाले स्वाभाविकानां कर्तृत्वभोक्तृत्वादिधर्माणामाश्रयः तद्धर्मप्रवृत्तिनिमित्तकानां नाम्नां च विषयभूतः । सः मुक्तिकाले स्वकीयं नामरूपजातं विहाय परमात्मनैक्यं प्राप्नोति 'यथा नद्यस्स्यन्दमानास्समुद्रेऽस्तं गच्छंति नामरूपे विहाय । तथा विद्वान्नामरूपे विहाय परात्परं पुरुषमुपैति दिव्यमि'ति श्रवणात् । मुक्तिकाले देहेंद्रियसंघातादुत्क्रमिष्यतो जीवस्य परमात्मैक्यं भविष्यतीति भविष्यदक्यमपक्ष्य वणनमित्येतदेव श्रीभागवतमतमिति भक्तानामाशयः ॥ 'आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च ॥ मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः' इति श्रुतेरित्यलं विस्तरेण ॥

वत्वाद्वस्तुनः । किमाशाया लज्जास्ति । किं वृथा । अलमलमयाच्य-याचनेन । किमार्द्रकवणिजां वहित्रचिन्तया । 'चुलुकेनाम्भः पातुं खनितव्यः किं तटाकोऽपि'। मुमुक्षोः (पान्थस्य नदीप्रवाहमुत्तितीर्षोः सेतुनौकादिसाधनभेदेऽपि यथा नद्युत्तरणं समानं) तथा प्रस्थानभेदेऽपि प्राप्यभेदो नास्त्येव । व्यावहारिकप्रश्नप्रतिवचनागोचरस्य दुर्विज्ञेयस्य मूकानुभूतस्वप्नवृत्तस्येव यथाज्ञातस्यापि वक्तुमसाध्यस्य) तत्त्वस्य ब्रह्मणः, अथवा मम भगवतः अथवा स्वात्मतत्त्वस्य निर्धारणचिन्तामेव त्यज । "को अद्धा वेद । क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टि" रिति श्रुतिरेवात्र मानम् । तदुपरि मा शङ्किष्ठाः ।

'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥'

तृप्तो भव । भावोन्मादेन बहुधा हठं मा कार्षीः । शठ पुनरिदानीं गीताः पठ, सहस्रनाम, श्रीरुद्रं, पुरुषसूक्तं अन्ततो भागवतं च । अन्ते सुगतिर्भवत्येव । इदमेव ते वक्तव्यं । 'सर्वधर्मान् परित्यज्ये'ति । भक्तिज्ञानवैराग्याणि संहृत्य ते स्वास्थ्यं जनयन्ति ।

यथा——

'विचारेणाद्वैतभावं नैर्मल्यं शुद्धकर्मभिः ।
योगेन चित्तनैश्चल्यं ज्ञानान्निर्लेपतास्थितिम् ॥
असंसक्तिं च वैराग्याद्भक्तेर्मन्मयतां व्रज ।'

(इतीश्वरगीता)

'यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ।
सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता ॥'

इति हि शास्त्ररहस्यम् । अथापि—

स्पर्शमणेः स्पर्शवशात्कनकीभावं प्रयातमिव लोहम् ।
मत्परिरम्भाद्दिव्यं देहं शक्तिप्रवेशतस्तेऽभूत् ॥ ६८

अयि वत्स प्रह्लादनारदादिपरमान्तरङ्गेष्वन्तर्भूतोऽसि । धन्यः इति जल्पन्नन्तर्दधे ॥ तत्क्षणमेव च सर्वे गोपालबालकाश्चान्तर्धिमगमन् । अस्मदीयाश्च सर्वेऽन्तर्हिताः । शिष्टश्चाहं द्वितीयाद्वितीयः । ततोऽहं नष्टचेतन इव ग्रहग्रस्त इव उन्मत्त इव चिरं तूष्णीं भूत्वा जायाकृतैः शिशिरोपचारैः चिराल्लब्धसंज्ञः उच्चैस्स्वरेण ।

क नु यास्यसि राधिकाधव प्रविहायानुगतं च मामयि ।
न हि ते करुणामृताम्बुधेरुचितं दासजनप्रतारणम ॥ ६९

गोपीजनापीनपयोधरात्तश्रीगन्धसम्बन्धसुगन्धदेहम् ।
अप्राकृतं नूतननीरदाभं भूयोऽपि सन्दर्शय ते मनोज्ञम् ॥ ७०

श्रीराम नारायण वासुदेव गोविन्द दामोदर कैटभारे ।
विवृत्तवक्त्रेण विलोकय त्वं भूयोऽपि गोपीजनपाल कृष्ण ॥ ७१

साचीकृतेन वदनेन विवृत्तचक्षुः
पश्याधुना कमलनाभ तवाङ्घ्रिभक्तम् ।
मां त्वामनुव्रतमयि त्वयि दत्तपञ्च-
प्राणं विहाय कथमद्य पलायितोऽभूः॥ ७२

श्रीपते यादवपते समस्तजगतां पते ।
श्रुत्वार्थनां भव स्वामिन्विवृत्तवदनाम्बुजः ॥ ७३

कस्तूरीतिलकालिप्तफालभागसुशोभितम् ।
सन्दर्शयाननं भूयो मायूरमकुटोज्ज्वलम् ॥ ७४

मुक्तामाणिक्यभूषाभिर्भूषितं दिव्यविग्रहम् ।
स्वभावसुन्दरं भूयो हरे सन्दर्शय प्रभो ॥ ७५

आहितं यद्धीगुहायां परे व्योम्नि निगूहितम् ।
शब्दजालारण्यगुप्तमीहे त्वामुपगूहितुम् ॥ ७६

आनाभिलम्बिनीं मालामम्लानकुसुमैश्चिताम् ।
दिव्यगन्धां दधानं त्वां त्यक्त्वा जीवाम्यहं कथम् ॥ ७७

नयने पिहिते करेण मे पुनरायाहि किशोरशेखर ।
पिब खाद निषीद मेऽन्तिके ऽच्युत गोविन्द मुकुन्द माधव ॥

स्वामिंस्त्वां गाढमालिङ्ग्य पीत्वा रूपामृतं बहु ।
कथं शक्नोम्यवस्थातुं हित्वा त्वां हस्तसंस्थितम् ॥ ७९

क्वासि क्वासि क यातोऽसि नन्दनन्दन सुन्दर ।
व्रजावासिजनानन्द भक्तहृत्पद्ममन्दिर ॥ ८०

सुप्तहस्तस्थसुमवत्स्रस्तं त्वां सर्वतः स्थितम ।
आकृष्य हृदये गाढं भक्त्या योगबलेन च ॥ ८१

प्रेमपाशैः प्रत्यभिज्ञारूपं बध्नामि युक्तितः ।
प्रमृष्टं पाणिना प्रेम्णा प्रेऽञ्चवस्त्रेण ते मुखम् ॥ मम ८२

(पुनस्सन्दर्शय विभो पुनस्सन्दर्शय प्रभो ।)

पुनस्सन्दर्शय मुखं धावनोद्धूलिधूसरम् ।
मार्जयित्वा पुनस्सम्यक्तिलकेन विभूषये ॥ ८३

अहो रूपमहो रूपमुपमानविवर्जितम् ।
निर्जिताक्षैः काङ्क्षणीयं मनोज्ञं सगुणं तव ॥ ८४

अपर्याप्तं नयनयोस्तथैवानन्वितं धियः ।
अद्य ते सगुणं रूपं विस्मर्तुं शक्नुयां कथम् ॥ ८५

यं च नोपनिषद्वाचोऽप्यधिगच्छन्ति तत्त्वतः ।
पुनर्भवन्तं वाञ्छामि द्रष्टुं मेऽनुग्रहं कुरु ॥ ८६

वाक्यजालैरवाच्यं यन्मनसाचिन्त्यमव्ययम् ।
धियाप्यवेद्यं ते रूपमन्तरेव विभावये ॥ ८७

किङ्करः किं करोम्यद्य प्रेमपाशवशंवदः ।
निष्कारणदयासिन्धो सिञ्च नेत्रामृतांशुभिः ॥ ८८

श्रुतिभिरपि विमृग्यो ब्रह्मभूयं गताना-
मपि पुरुरसनीयोऽमूर्त आनन्दसारः ।
अहह मम पुराविर्भूय यत्नात्स्वयं त्वं
वद किमयि विभो ऽन्तर्धाय लीलां विधत्से ॥ ८९

कथं प्राणान्धारयेऽहं मन्दभाग्यो जगत्पते ।
अपश्यंस्त्वन्मुखविधुं स्मितदीधितिशोभितम् ॥ ९०

श्रीकृष्ण विष्णो मधुकैटभारे भक्तानुकम्पाधृतदिव्यमूर्ते ।
सर्वत्र पश्यामि तव स्वरूपं नमो नमस्तेऽस्तु सहस्रकृत्वः ॥ ९१

आध्यासिकस्फुरणभेदतिरोहितोऽपि
चिद्धातुरेकरस एव भवानचिन्त्यः ।
ब्रह्मादयोऽपि न विदुस्तव मूलरूपं
केऽमी वयं तदुपदिष्टवचोविवेकाः ॥ ९२

वन्दारुजनमन्दार गोविन्द यदुनन्दन ।
गोपीजनानन्दकन्द क्वासि क्वासि कृपानिधे ॥ ९३

हे गोपाल विभो दयारसनिधे हे गोपवेष प्रभो
हे गोविन्द गजेन्द्ररक्षक कवे हे वेणुनादप्रिय ।
हे गोपीवसनापहारनिपुण स्वामिन्मुरारे हरे
हे गोपीस्तनशैलनीलजलदोत्कण्ठेक्षणालोकने ॥ ९४

इति परावृत्य पार्श्ववर्तिनीं स्वकुटुम्बिनीमुद्दिश्य—

अत्राविर्भवति स्म सोऽत्र भगवानन्नं ययाचे च मा-
मस्मिन्कुञ्जगृहे निलीय भगवान्दुद्राव कृष्णः पुनः ।
अत्राभाषितमत्र संस्थितमिहाश्लिष्टं मया तुष्टितः
कृष्णेनात्र निविष्टमत्र कृपया भुक्तं च पीतं तथा ॥ ९५

इति पूर्वानुभूतार्थचिन्तयाविष्टचेतनः ।
तन्मनस्कस्तदालापस्तदाहं जडसन्निभः ॥ ९६

कृष्णग्रहग्रस्तचेता नाविदं बाह्यमान्तरम् ।
आनन्दसंप्लवे लीनः केवलं हरिसंश्रयात् ॥ ९७

उच्चै रुदंस्तदा कृष्णचिन्ताकबलिताशयः ।
तद्दर्शनोत्कण्ठचित्तो व्रीडाविरहिताशयः ॥ ९८

कृष्ण विष्णो हृषीकेश वासुदेव जगत्पते ।
आयाहि पाहि गोविन्द सन्दर्शय मुखाम्बुजम् ॥ ९९

अयि राधापते स्वामिन्नायाहि जगतां पते ।
इति तद्भावनायुक्तस्तन्मयस्सन्नहमन्मुहुः ॥ १००

निर्भरप्रणयानन्दबाष्पसंरुद्धलोचनः ।
तूष्णीमुत्पुलको भूमौ यदाहमपतं तदा ॥ १०१

भवो भवान्या सहितोऽष्टमूर्तिर्भक्तौघहृत्तापविनाशदीक्षः ।
श्रीदक्षिणामूर्तिगुरुस्वरूपः प्रत्यक्षतो मे पुर आविरास ॥ १०२

स्तोतुं प्रवृत्तोऽस्मि तदाहमेवमनङ्गशत्रुं भगवन्तमाशु ।
भक्त्या तदैकात्मिकया प्रवृद्धविश्वासभावात्मिकया समेतः ॥ १०३

यथा—

शम्भो शङ्कर नीलकण्ठ भगवन्स्वामिन्मृडानीपते
शूलिन्साम्ब हरान्धकासुरहर त्रैय्यन्तवेद्य प्रभो ।
स्तोतॄणां हृदयान्धकारपटलप्रध्वंसचण्डार्क भोः
सुज्ञानप्रद पाहि पाहि करुणासान्द्रेन्दुचूडामणे ॥ १०४

शिव शङ्कर चन्द्रशेखराम्बरकेशाव्यय नीलकण्ठ भोः ।
हर साम्ब गिरीन्द्रनन्दिनीहृदयानन्दकराच्युतप्रिय ॥ १०५

जय शङ्कर पाहि पाहि मां करुणासान्द्र वृषेन्द्रवाहन ।
शरणं करवाणि ते पदे भव मृत्युञ्जय रक्ष रक्ष माम् ॥ १०६

जय जयामरवन्दितपाद भोः शशिकलाभरणान्धकसूदन ।
नहि भवन्तमृते शरणं नृणां भवपयोनिधिसन्तरणे गुरो ॥ इति ॥

अम्ब मां पाहि हेरम्बजननि त्र्यम्बकाङ्गने ।
अमृतापाङ्गविसरैस्सिञ्च मां पादसेवकम् ॥ १०८

अथ महादेव उवाच—

पूर्णोऽसि वत्स मा भैषीः कृतार्थोऽसि शमं व्रज ।
अन्तर्बहिश्च ते पार्श्वे पृष्ठतस्सर्वतो दिशम् ॥ १०९

सर्वस्वरूपी भगवान् हृदये ते विराजते ।
खेदं मा स्म गमस्स्वान्ते स्वमौग्ध्याद्विचारयन् ॥ ११०

स्वस्कन्धविधृतच्छागमार्गगश्रान्तगोपवत् ।
इत्याश्वास्य हसन् भक्तवत्सलो मस्तके मम ॥ १११
भक्तलोकस्वस्त्ययनं वामहस्तं निधाय च ।
भो वत्स भक्त माभैषीरित्याश्वास्य हसन्मुखः ॥ ११२
त्वत्प्रेमदाम्ना वलिताङ्घ्रिरेवं मां चोदयामास स वासुदेवः ।
सखे समाश्वासय दीनमेनं संरूढभावं कुरु मुग्धचित्तम् ॥इति॥
अतो भयेऽहं परमार्थतत्त्वमलं श्रुतैश्शास्त्रचयैश्च योगैः ।
यागैर्व्रतैर्नश्वरसौख्यदैः किं भजस्व विज्ञानविरक्तिभक्तीः ॥
शृणु निश्चलचित्तेन सावधानमना भव ।
इत्युक्त्वा भगवान्प्राह शङ्करो लोकशङ्करः ॥ ११५
श्रीकृष्णसततध्यानात्सदा तन्नामसंस्मृतेः ।
कृष्णाकाराकारितया धिया तत्र धृताशया ॥ ११६
भक्तिभावरसोन्मादद्रुतचित्तानुविद्धया ।
अचलं प्रेमपाथोधिं सर्वमापूर्य संस्थितम् ॥ ११७
प्रधावमानं मत्वा त्वं कुर्वंस्तदनुधावनम् ।
श्रान्तोऽसि "हृदये" सम्यक् शास्त्रदृष्ट्या विचारय ॥ ११८
तव पूर्वमहापुण्यपरीपाकवशादपि ।
सत्यसङ्कल्पवंशतो भक्तवाञ्छाप्रपूरकः ॥ ११९
तवाशां पूरयामास भगवान् देवकीसुतः ।
ऐक्याच्च युवयोर्भक्त कणनिर्झररूपयोः ॥ १२०
संयोगो वा वियोगो वा लीलार्थं कल्पितः प्रभोः ।
तेऽनुमहाय स तथा चक्रे भक्तवशंवदः ॥ १२१

अब्धौ जातस्तरङ्गो न पृथक्सत्तायुतो यथा ।
तथा कृष्णात्पृथक्सत्ता न ते क्वचन विद्यते ॥ १२२

दीपात्समुज्ज्वालितदीपवत्त्वं सर्वात्मनाभेदनिजस्वरूपः ।
शास्त्रेण युक्त्या च निजानुभूत्या स्वयं सुपूर्णोऽसि हरेः कृपातः।

कृष्णे जातः स्थितः कृष्णे कृष्णे त्वं लीयसेऽन्ततः ।
मास्तु चिन्ता दुरन्तेयं पृथक्सत्ताभिमानजा ॥ १२४

त्यज मोहं भज हरिं सहजानन्दमाप्स्यसि ।
ब्रह्मेति परमात्मेति भगवानिति यश्श्रुतः ॥ १२५

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।
जगद्धितार्थं भगवान्देहवानिव राजते ॥ १२६

परीक्षिते प्राह चैवं शुको ह्यात्मविदां वरः ।
भक्तिमार्गानुसारेण ज्ञानमार्गमतः शृणु ॥ १२७

कृपावशाच्छ्रीभगवन्मुरारेरहेतुजातात्करुणारसाब्धेः ।
पूर्णोऽसि वत्स त्वमितोऽपि किञ्चित्संसाधनीयं न हि तेऽस्ति लोके॥

[1]अन्योन्यसंवेशविधानतस्स्यात्ताम्रं सुवर्णं रसयोजनेन ।
[2]यत्स्पर्शवेधी कुरुते ग्रसित्वा मलं ह्ययस्तत्क्षणतस्सुवर्णम् ॥ १२९

[3]स्वोत्कृष्टजातिद्रुमशाखया समायोगेन तादृक्परिणाममाप्नुवन् ।
चूतो रसालो भवति क्रमाद्गुणैस्तद्वृक्षसाजात्यवयोरसादिभिः ॥१३०

1 ध्यानयोगसिद्धः ।

2 गुरुसेवया स्पर्शदीक्षादृग्दीक्षादिभिः लब्धसिद्धिः पुरुषः ।

3 उपासनामार्गानुसारी सिद्धः ।

[1]स्वादृष्टहेतोस्समये समागते स्वयं वसन्ते परभृत्पिको भवेत् ।
[2]अङ्गारमत्यन्तनिघर्षणेन यत् वाणिज्यविज्ञाश्च मणिं प्रकुर्वते ॥
[3]कीटो यथावा भ्रमरो भवेन्निराद्भयाभिसन्धानवशात्तचिन्तया ।
[4]ध्मातं सुवर्णं मलसंक्षयेण तत् स्वमेव रूपं भजते यथा पुनः ॥
यथा तथा शास्त्रशमादिसाधनैर्गुरूपदेशैरपि सत्समागमैः ।
अनेकजन्मान्तरपुण्ययोगतश्शास्त्रीयसत्पौरुषसाधनक्रमैः ॥ १३३
कर्तृत्वभोक्तृत्वविधानहीनफलाभिसन्ध्यन्वयवर्जितेन ।
निष्कामकर्माचरणेन भक्त्याप्यकर्त्रभोक्त्रात्मविवेचनेन ॥ १३४
निरन्तरात्मेश्वरभावनेन दृग्दीक्षया देशिकपुङ्गवस्य ।
देहात्मभावे गलिते क्रमेण ब्रह्मासि च त्वं परमेव पूर्णम् ॥ १३५

यथा—

सत्यं ज्ञानमनन्तमद्वयमजं त्वं ब्रह्म पूर्वं तत-
स्स्वेनैवोल्लसितेन संवृततनुस्सन्पञ्चभिः कञ्चुकैः ।
शास्त्राभ्यासशमादिसाधनमहत्सद्देशिकारुण्यत-
स्स्वं भावं पुनराप्तवानिव सुतो राज्ञः किरातादृतः ॥१३६
ब्रह्मैव त्वमिदं जगच्च सकलं तोयप्रवाहो मरौ
यद्वत्त्वय्यखिलात्मनीश्वरजगज्जीवादिभेदात्मना ।

---

1 दैवाल्लब्धसाधुसङ्गादिना समुत्तीर्णसिद्धिकः यथा ध्रुवादिः ॥

2 हठयोगादिसाधकः ।

3 श्रद्धाजडः कर्मी भक्तः ।

4 अध्यात्मविचारयोगाभ्यासभक्तिवैराग्यसहितसाधकश्रेष्ठः स्वाधीनकैवल्यः । इतरे भगवदधीनकैवल्याः इत्याकूतम् ॥

स्वीयामेयविलासशक्तिकलितप्रत्यक्स्वरूपे परं
बाभातीत्थमितः परं किमपि नो वक्तव्यमस्त्यर्भक ॥१३८

यत्सत्यं परमार्थतः परमिदं तद्ब्रह्म मायावशा-
ल्लोकानुग्रहणाय शङ्करमयं विष्ण्वात्मकं चेत्यभूत् ।
तच्चोपासितमेव सम्यगधुना ज्ञातं त्वया निश्चितं
पूर्णोऽसि त्वमितः परं किमपि नो ज्ञातव्यमस्त्यर्भक ॥

देहेऽहं मतिरस्ति यावदयि ते तावच्च दासोऽसि नः
जीवोऽहन्त्विति यावदस्ति धिषणास्माकं भवानंशकः ।
आत्माहन्त्विति धीरुदेति च यदास्मत्तो ह्यनन्यो भवा-
नेवं धीपरिकल्पिता त्वयि भिदास्मत्तो मुधा भ्रान्तितः ॥

किंच—

अग्नौ हुतं घृतं सर्वमग्निरेव भवेद्यथा ।
सर्वं च विदितं वेद्यं संविदेव भवेत्तथा ॥ १४०

संविदितं संविदितं संविन्मयमेव भवति संवेद्यम् ।
अग्नावाहितमाहितमग्निमयं किं न जायते काष्ठम् ॥ १४१

मथितोन्मथितेनालं मौनमेव समाश्रय ।
श्रय देशिकपादाब्जं स्वयं बुद्ध्वा विचारय ॥ १४२

इत्यन्तर्धिं गतस्तत्र भवान्या सहितश्शिवः ।
तदाहं भगवन् शम्भो पाहि शङ्कर मामिति । १४३

विज्ञापयन्नहं शम्भुमन्वधावमुमापतिम् ।
प्रांजलिः प्रार्थयन्नेवं हर्षगद्गदया गिरा ॥ १४४

विज्ञापनप्रकारो यथा—

ब्रह्मात्मत्वं स्फुटमधिगतं त्वत्प्रसादान्मयैत-
त्त्वत्पादाब्जप्रणतिफलितं नित्यमोक्षस्वरूपम् ।
आसुप्तेरामृति मम सदा राधिकाप्राणनाथे
रूढा भक्तिर्भवतु सगुणे निर्गुणे च त्वयीशे ॥ १४५

"शैवा वयं न खलु तत्र विचारणीयं पञ्चाक्षरीजपपरा नितरां तथापि ।
चेतो मदीयमतसीकुसुमावभासं स्मेराननं स्मरति गोपवधूकिशोरम् ॥"

इति नृत्यति हर्षेण सम्भ्रमेण समन्विताः ।
प्राबोधयन्मां पार्श्वस्थास्स्वामी स्वामीति सादरम् ॥ १४६

तेषां मया स्वप्नवृत्तं यथावदनुवर्णितम् ।
श्रुत्वा ते हृष्टमनसस्तुष्टुवुः श्रीहरिं मुदा ॥

यथा—

नमो नारायणानन्त वासुदेव जगत्पते ।
उद्धरास्माञ्जगन्नाथ घोरात्संसारसागरात ॥
श्रीकृष्ण श्रीकर श्रीश श्रीराम श्रीनिधे हरे ।
श्रीकृष्ण करुणासिन्धो राधावल्लभ ते नमः ॥
श्रीनाथ श्रीमहाविष्णो श्रीनृसिंह जनार्दन ।
गर्भजन्मजराव्याधिदुःखसंसारसङ्कटात् ॥
उद्धरास्माञ्जगन्नाथ गोपगोपीश्वरेश्वर । इति ॥
सर्वमीशकृपाकार्यमिति हृष्टोऽस्मि चेतसि ।
स्वप्नो न जाग्रन्नो सा तु विलक्षणदशा ध्रुवम् ॥

श्रीसुब्रमण्यविबुधाङ्कतलाधिरूढा
श्रीमन्नटेशकलभाषण (लब्ध) शुद्धशीला ।
शुश्रूषुलोकहृदयाङ्गणसीम्नि नित्यं
क्रीडां तनोतु मम काव्यकुमारिकेयम् ॥

किंच—

श्रोतुं पराङ्मुखधियः कुधियो भवंतु
ये केऽपि मत्कृतिमिमां किमु तावता मे ॥
नूनं कृतिं मम शृणोति दयाम्बुराशि-
श्श्रीराधिकेश इति हृष्यति मेऽन्तरात्मा ॥
एतां कृतिं कतिचनापि महानुभावाः
कृष्णार्चनापुलकिताङ्गलताः पठन्ति ।
राधामनोहरपदाम्बुरुहाश्रया ये
तत्कीर्तनश्रवणसंस्मरणप्रहृष्टाः ॥
तर्कव्याकृतिपूर्वतन्त्रविदुषां नाप्यत्र वेदान्तिनां
योगध्यानविदां च कर्मठततेस्तोषाय वा यत्यते ।
ये तु श्रीहरिनामकीर्तनरताश्श्रद्धाळवस्साधव-
स्तानुल्लासयितुं कृतां कृतिमिमां पश्यन्तु निर्मत्सराः ॥

॥ इति शम् ॥

काञ्चीमण्डलकामकोटिमठराडास्थानसंख्यावता
काञ्चीमण्डलकाकवाकनिलयश्रीकृष्णनाम्ना मया ।

राधामाधवपृष्ठधावनकथाग्रन्थे चतुर्थोऽद्भुतो
ह्याश्वासो भगवत्कृपामृतरसावाप्त्याह्वयः पूरितः ॥

ग्रन्थस्समाप्तः ॥

इति श्रीमदुमारमणकरुणासमासादितानवद्यहृद्यमृदुपद्यकविताभूषणस्य श्रीनन्दनन्दनपदारविन्दभजनानन्दतुन्दिलहृदयस्य वरिवस्यापरितोषितसाधुबृन्दस्य काञ्चीकामकोटियतिराडास्थानविद्वन्मण्डलीकिङ्करस्य काञ्चीमण्डलमण्डनायमानकाकवाकाग्रहाराभिजनस्य पञ्चद्राविडान्तर्विभागभूतान्ध्रभूसुरवंशसंजातस्य वेगिनाडुसंज्ञकान्तश्शाखामहितस्य स्मार्ताचारसम्प्रदायवर्तनस्य आत्रेयगोत्रसम्भूतस्य श्रीवेङ्कटकृष्णश्रौतिसुब्बलक्ष्म्यम्बापुत्रस्य सौजन्यसौशील्यादिगुणगणभूषिताया जानकीनाम्न्यास्सीमन्तिन्याः प्रियभर्तुः श्रीकृष्णाभिधानस्य कवेः कृतिषु **भगवदनुधावनाभिधाने** विचित्रकथासंविधाने प्रबन्धे भगवत्कृपामृतरसावाप्तिर्नाम चतुर्थाश्वासः ॥

समाप्तश्च भगवदनुधावनं नाम चंपूग्रन्थः ॥

हरिः - ओं तत्सत् श्रीकृष्णार्पणमस्तु ॥

इति भगवद्भागवतविधेयः श्रीकृष्णाभिधेयः ॥

Printed at t e

## ५९ पत्रे ५९ श्लोकानन्तरं पठनीयाः श्लोकाः ॥

मद्रास्नगर्यां हि गणेशनामा श्रीमातृपादाम्बुजदासदासः ।
साह्यं करोत्येव मदीयमित्रं प्रज्ञायुतो दीनजनानुकम्पी ॥ १

धावस्व धावस्व हरे मुरारे किं मे विनाष्टिर्ननु बोभवीति ।
त्वामद्य धावन्तमहं विसृज्य श्रीमातृमूर्त्यै नु समर्पयामि ॥ २

भक्ष्याणि भोज्यानि मयाहृतानि पेयान्यमेयानि मनोहराणि ।
स्वामिन्पुरा स्वीयविशेषलीलाः या या वितन्वन्मधुरानगर्याम् ॥ ३

आनन्दयामासिथ भक्तबृन्दं तास्वप्यतृप्त्या(प्तो) धृतमातृमूर्तिः ।
श्रीमन्नगर्यां मधुराभिधायां त्वं दक्षिणस्यां दिशि पाण्ड्यदेशे ॥ ४

पद्मालयाख्यायुतदिव्यदेशे(गेहे) विराजसीत्यश्रुणवं बहुभ्यः ।
अनुग्रहार्थं कलिकालजानां सन्त्यक्तसत्कर्मपरम्पराणाम् ॥ ५

तपोविचाराध्ययनव्रतेज्याहीनात्मनामादृतदुष्क्रियाणाम् ।
सार्थं विधातुं बिरुदं स्वकीयं तद्दीननाथादिकमद्य नूनम् ॥ ६

पद्मालये श्रीमधुरानगर्यां पाण्ड्येषु गूढाकृतिधारणेन ।
स्थितं भवन्तं भगवन्तमाहुः परावरज्ञा यतयो महान्तः ॥ ७

शृङ्गेरिपीठाधिपचन्द्रशेखराख्यायुता भारतिसम्प्रदायाः ।
सौलभ्यसौजन्यनिदानभूतश्रीमातृमूर्त्या भजतां सुखार्थम् ॥ ८

त्वां भक्तमूर्तिं भगवन्तमेव पश्यन्ति भक्तास्स्वमनोनुरूपम् ।

अतः—

मामर्भकं दीनतरं विलोक्य स्नेहार्द्रभावा मधुरानिवासा ॥ ९

स्वीकृत्य भक्ष्याणि दयाम्बुराशिः सम्पूरयेदेव ममाभिलाषम् ।

स्वर्णस्य नाडिन्धमहस्तगस्य भेदो हसन्त्यां न हि संस्थितस्य ॥ १०

यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोरुशाखाः ।
स्यान्मातुराराधनतो ह्यसंख्यब्रह्माण्डमूर्तेश्च तवापि तृप्तिः ॥ ११

तन्मातुराराधनमेव कुर्वे स्वाभिन्नमूर्तेस्तव तृप्तिमिच्छन् ।
पञ्चाशदस्तीति शते हि नीत्याप्यन्तर्गतैव त्वयि मातृमूर्तिः ॥ १२

धावस्व धावस्व न चाह्वयामि त्वां नानुधावामि च राधिकेश ।
अतोऽद्य मात्रे च समर्पयामि भक्ष्याणि सर्वाणि नमोऽस्तु तुभ्यम् ॥

इति वादिनि साह्लादं श्रीकृष्णस्त्वेवमब्रवीत् ।
धन्योऽसि भक्त धन्योऽसि तथा कुर्वीति संवदन् ॥ १४

अन्तर्दधे गणेशेन मन्मित्रेण सहाच्युतः ।
किं करोमि क गच्छामि केशवानन्त माधव ॥ १५

कृष्ण विष्णो हृषीकेश दामोदर जगत्पते ।
राधापते जगन्नाथ लक्ष्मीवल्लभ ते नमः ॥ १६

आयाहि पाहि गोविन्द मुकुन्द यदुनन्दन ।
श्रीनाथ रुक्मिणीप्राणपते श्रीगोपिकापते ॥ १७

सताङ्गते नमस्तुभ्यं भक्तवत्सल वामन ।
नारसिंह हरे स्वामिन् कृष्णाव्यसनकर्शक ॥ १८

दैत्यारे पुण्डरीकाक्ष दीनसंरक्षक प्रभो ।
इति स्तवं मम श्रुत्वा पुरो मे पुनराबभौ ॥ १९

तदाहं धावंतमच्युतं साकूतमभिवीक्ष्यपुनः ।

। श्रीः ॥

# " गर्गसंहिता " " गोलोकखण्डः "

श्रीनारद उवाच—

गोसाधुदेवताविप्रवेदानां रक्षणाय वै ।
तनुं धत्ते हरिस्साक्षाद्भगवानात्मलीलया ॥
यथा नटस्स्वलीलायां मोहितो न परस्तथा ।
अन्ये दृष्ट्वा च तन्मायां मुमुहुस्ते न संशयः ॥

श्रीजनक उवाच-

कतिधा श्रीहरेर्विष्णोरवतारो भवत्यलम् ।
साधूनां रक्षणार्थं हि कृपया वद मां प्रभो ॥

श्रीनारद उवाच—

अंशांशोंऽशस्तथावेशः कलाः पूर्णः प्रकथ्यते ।
व्यासाद्यैश्च स्मृतष्षष्ठः परिपूर्णतमस्स्वयम् ॥
अंशांशस्तु मरीच्यादिः अंशो ब्रह्मादयस्तथा ।
कलाः कपिलकूर्माद्याः आवेशा भार्गवादयः ॥
पूर्णो नृसिंहो रामश्च श्वेतद्वीपाधिपो हरिः ।
वैकुण्ठोऽपि तथा यज्ञो नरनारायणः (प्रभुः) स्मृतः ॥
परिपूर्णतमस्साक्षाच्छ्रीकृष्णो भगवान् स्वयम् ।
असंख्यब्रह्माण्डपतिः गोलोके धाम्नि राजते ॥
कार्याधिकारं कुर्वन्तस्तदंशास्ते प्रकीर्तिताः ।
तत्कार्यभारं कुर्वन्तः तेंऽशांशा विदिताः प्रभोः ॥

येषामन्तर्गतो विष्णुः कार्यं कृत्वा विनिर्गतः ।
नानावेशावतारांश्च विद्धि राजन्महामते ॥
धर्मं विज्ञाय कृत्वा यः पुनरन्तरधीयत ।
युगे युगे वर्तमानस्सोऽवतारः कला हरेः ॥
चतुर्व्यूहो भवेद्यत्र दृश्यन्ते च रसा नव ।
अतःपरं च वीर्याणि स तु पूर्णः प्रकथ्यते ॥
यस्मिन्वीर्याणि तेजांसि विलीयन्ते स्वतेजसि ॥
तं वदन्ति परे साक्षात्परिपूर्णतमं स्वयम् ॥
पूर्णस्य लक्षणं यत्र यं पश्यन्ति पृथक्पृथक् ।
भावेनापि जना सोऽयं परिपूर्णतमस्स्वयम् ॥
परिपूर्णतमस्साक्षात् श्रीकृष्णो नान्य एव हि ।
एककार्यार्थमागत्य कोटिकार्यं चकार ह ॥

पूर्णःपुराणः पुरुषोत्तमोत्तमः, परात्परो यः पुरुषः परेश्वरः ।
स्वयं सदानन्दकरं कृपाकरं, गुणाकरं तं शरणं व्रजाम्यहम् ॥

३२ पृष्ठे ५ श्लोके ‘ पूर्णतमावतार ’ इत्यत्र प्रमाणत्वेनानुसन्धेयाः इमे श्लोकाः

श्रीराधाधवश्शरणम् ॥

---

## ५६ पत्रे ६० श्लोकानन्तरं अनुसन्धेयाः श्लोकाः ॥

मैलापूर्नगरे मां तु प्रतार्य यदि लीयसे ।
तत्र 'वी' कृष्णसाम्यार्यकलाशाला विराजते ॥

कलाशालाधिपो बालसुब्रह्मण्याभिधो महान् ।
तदध्यक्षोऽपि सोऽन्वेष्टुं साह्यकारी विचक्षणः ॥

अन्तर्वाणिमणिर्बालसुब्रह्मण्याभिधस्सुहृत् ।
मित्ररत्नं तत्र कृष्णमूर्तिशास्त्री सुधीवरः ॥

तत्र लीनं भवन्तं मे सूचयेयुर्हि ते क्षणात् ।
सर्वगं त्वां विचेतुं मे सन्त्यनेके विचक्षणाः ॥

नैतावदेव—

साह्ये त्वदन्वेषणेऽस्ति पोलगं रामपण्डितः ।
शब्दजालमहारण्यहरिं त्वां लक्षितुं क्षमः ॥

अध्यात्मशास्त्रनिपुणश्शुकवाग्रसज्ञो
यो माम्बळे हरिहराद्वयभावबोद्धा ।
श्रीलक्ष्मणाभिधबुधो मधुरस्वभाव-
स्त्वन्मार्गणे मम करोति महद्धि साह्यम् ॥

## ६३ पत्रे ९२ श्लोकानन्तरमनुसन्धेयश्लोकौ ॥

श्रीदेवकीनन्दननामधेययतीन्द्रचन्द्रस्य सहायतस्त्वां ।
गृह्णामि राधाधव बालकृष्ण मुधाधुना धावसि माधवेत्थम् ॥

यःकेरळान्ध्रमहराष्ट्रकघूर्जरेषु समाहयज्ञविधिचोदनजागरूकः ।
दत्तांशजं यमु वदन्ति महाविरक्तं त्वद्भक्तिबोधमहितं महतां वरिष्ठम् ॥

७३ पत्रे १८७ श्लोकानन्तरपठनीयोऽयमर्धश्लोकः ॥

यो धर्मविध्वंसिसुधारकासुरप्रध्वंसदीक्षासहितो दिवानिशं ।

१०० पत्रे ६२ श्लोकानन्तरं योज्योऽयं श्लोकः ॥

ब्रह्माण्डकोटिजठरो भगवान्स कृष्णः

पीत्वाऽऽगळं ह्युपनिषत्फलजातसारं ।

मैऽलं ममालमिति मेति शिरो विधून्वन्

गोपालबालनिवहैस्सहसोदतिष्ठत् ॥ तदानीं :—

## ॥ एतत्प्रबन्धोद्दिष्टदेशनाम्नामनुक्रमणिका ॥

## ॥ एतत्प्रबन्धोद्दिष्टदेशवासिनाम्नामनुक्रमणिका ॥



## ॥ शुद्धाशुद्धपत्रम् ॥

| पृष्ठं | पंक्तिः | अशुद्धम् | शुद्धम |
|---|---|---|---|
| २ | ९ | हरिंचित्त | हरिचित्त |
| ,, | १२ | सारङ्गा | सारङ्गा |
| ३ | ४ | निस्वनञ्चित | निस्वनाञ्चित |
| १३ | २० | विविधनि | विविधानि |
| १४ | ८ | त्योत्पुत्य | त्योत्प्लुत्य |
| ,, | ९ | मनुद्रुत्य | मनुद्रुत्य |
| १५ | १२ | पूणोऽसि | पूर्णोऽसि |
| २० | ८ | चिह्नम् | चिह्नम् |
| ३४ | १ | रात्यापि | रीत्यापि |
| ३५ | ११ | सन्धियत्न | सन्धिप्रयत्न |
| ४२ | ५ | दध्यौदनं | दध्योदनं |
| ४६ | ९ | ख्यापयमी | ख्यापयामी |
| ४६ | १९ | स्वीकृरुषे | स्वीकुरुषे |
| ४७ | १२ | गृहीतु | ग्रहीतु |
| ५३ | ११,१२ | युक्तया | युक्त्या |
| ५६ | ३ | रसिको | रसिकः |

| पृष्ठं | पंक्तिः | अशुद्धम | शुद्धम् |
|---|---|---|---|
| ५६ | १० | सद्वृन्द | सद्वृन्द |
| ५६ | १० | कीतिः | कीर्तिः |
| ५७ | १४ | पाश्चात्य | पाश्चात्य |
| ५७ | २० | वोधात्त | बोधात्त |
| ५८ | २० | साह्येन | साह्येन |
| ५९ | ६ | चन्नटेश | चेन्नटेश |
| ५९ | १३ | वङ्गेहु | वङ्गेषु |
| ६० | ७ | सममय | समय |
| ६० | ८ | भमूवुः | बभूवुः |
| ६४ | ५ | भिपुर्णा | भिपूर्णा |
| ,, | ६ | लायसाश्चं | लालसाश्च |
| ,, | ११ | बाहवो | बहवो |
| ,, | १३ | पयागे | प्रयांगे |
| ,, | १८ | श्रह्म | ब्रह्म |
| ६७ | २० | यद्ब्रह्म | यद्ब्रह्म |
| ७० | १५ | नवनति | नवंनीत |
| ७१ | ३ | मङ्गल | मङ्गल |
| ७६ | २३ | संसर | संसार |
| ८१ | २ | प्राग्जोतिष | प्राग्ज्योतिष |
| ८२ | १० | तृर्यायमेव | तृतीयमेव |
| ८३ | ५ | निर्दृष्ट | निर्दृष्ट |

| पृष्ठ | पंक्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ८४ | १२ | नान्म्या | नाम्न्या |
| ८८ | २० | तदाह्— | तदाहं |
| ८९ | १७ | सवस्वं | सर्वस्वं |
| १०६ | १३ | मन्दभग्यो | मन्दभाग्यो |
| १०७ | ५ | कुटुम्ङिनी | कुटुम्बिनी |
| १०८ | ६ | शन्भो | शम्भो |
| ११० | ३ | समुष्ज्वालित | समुज्ज्वालित |
| ११५ | १८ | घृताङ्वा | घृताङ्का |

## ॥ शुद्धाशुद्धपत्रम् ॥

| पृष्ठं | पंक्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १२ | ३ | व्यळोकयं | व्यलोकयं |
| १२ | १४ | दन्तपङ्क्तिः | दन्तपंक्तिः |
| १३ | १५ | हस्ताम्बुजौ | हस्ताम्बुजे |
| १३ | १३ | नक्षत्रचिह्नाभावः | चिह्नस्थितिः |
| १९ | ७ | त्वाहं न बध्नामि | न त्वां प्रबध्नामि |
| १७ | २० | उपेन्द्र | उपजाति |
| १९ | १३ | अहोऽप्रमेयाप्रतिम | अक्षाप्रमेयाप्रतिम |
| २० | ८ | तेह्युरस्था लक्ष्मीः क श्रीवत्ससमाह्चिह्नं | वा विभो त्वं श्रीवत्स- चिह्नं ह्युरसि क ते श्रीः |
| २८ | ४ | वारणायवसुधावुरस्त्वया | भूमिभारविनिवृत्तये त्वया |
| २८ | १० | स्वमहिमा | तन्माहिमा |
| २८ | १४ | तद्द्विव्य | तद्दिव्य |
| २९ | १ | पितांबरं | पीतांबरं |
| ३३ | १४ | यदिंद्रधनुव | यदिंद्रचापव |
| ३४ | ९ | तुल्यत् | भिन्न |
| ३६ | ६ | तेपश्चात्तुद्धावतो | पश्चात्ते धावतो |
| ४० | ४ | मन्तवस्सहजकारुण्यामृताब्धेहरे | मन्तवोमुरहरेकारुण्यवारांनिधे |

| पृष्ठं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४० | १६ | श्रुणुष्व | शृण्वद्य |
| ४० | १७ | भवतोनियुक्ताः | भवता नियुक्ताः |
| ४२ | ११ | तोयमपीह | तोयमपीश |
| ४३ | ४ | तेपृष्ठतो | त्वत्पृष्ठतो |
| ४४ | ७ | इति स्तुवन्दीनतरं समाह्वयन् | इति स्तवैर्दीनतरं सगद्गदैः |
| ४५ | ५ | ते ख्यापयामीश्वर | प्रख्यापयामीश्वर |
| ४५ | ६ | ते ख्यापयामीश्वर | प्रख्यापयामीश्वर |
| ४५ | ११ | ते ख्यापयामीश्वर | प्रख्यापयामीश्वर |
| ४५ | १५ | ऋजुस्वभावो | शुद्धस्वभावो |
| ४६ | १ | तेख्यापयामीश्वर | प्रख्यापयामीश्वर ॥ |
| ४६ | ७ | तेख्यापयामीश्वर | प्रख्यापयामीश्वर ॥ |
| ४६ | १४ | प्रख्यापयामिभोस्वामिन् | इति प्रख्यापयामीश |
| ४६ | १७ | प्रख्यापयामिभोस्वामिन्न च | इति प्रख्यापयामीशन च |
| ४७ | ४ | कृष्णेत्युद्घोषणं | रक्षेत्युद्घोषणं |
| ४७ | १० | संप्रार्थयन् | संप्रार्थ्य |
| ४९ | १० | गृह्यतां | क्षम्यतां |
| ४९ | २१ | आह्वानार्थन | आह्वानार्थेन |
| ५० | १० | विहारादि | विहृत्यद्रि |
| ५० | ११ | विलासरुदनश्श्रीसानुमा | विलाससदनंश्रीसानुमा |

| पृष्ठं | पंक्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ५१ | ४ | त्वरितगतिनायान्त | त्वरितगतिभिर्यान्ति ॥ |
| ५१ | ११ | ऊधसन्धित | व्यूधसन्धित |
| ५५ | ५ | कुलदेशिकाहि | कुलदेशिकेन्द्राः ॥ |
| ५६ | ३ | श्रीशाङ्करोक्तिरसिको सुगुणी | श्रीशाङ्करोक्तिरसिक स्सुगुणी |
| ५६ | | विपश्चितायेनमनुष्य मात्रो | विपश्चितायत्सकलो मनुष्यः ॥ |
| ५६ | १० | लब्धकीतिः यः | लब्धकीर्तिर्यः |
| ५७ | १२ | एर्पेडु श्रीमन्मलयाळ | एर्पेडु धीन्मलयाळ ॥ |
| ५७ | १३ | तेपादपद्मे च । | त्वत्पादपद्मे च ॥ |
| ५८ | ६ | भौमस्वर्गोऽवमेरिकाख्य | भौमस्वर्गामेरिकाख्य |
| ५८ | १२ | समितिकार्यदर्शी | समितेःकार्यदर्शी |
| ५९ | १३ | समलङ्कृतो | समलङ्कृतो |
| ६० | ९ | महस्थलेषु | महास्थलेषु |
| ६१ | १३ | श्री निवासह्वय | श्रीनिवासाह्वय |
| ६२ | १९ | विदुषोपिसहायतस्त्वां | विदुषोऽपिचसाह्यत-स्त्वां |
| ६३ | १९ | स्त्वन्मर्गणे | स्त्वन्मार्गणे |
| ६४ | २ | सहायतस्त्वां | च साह्यतस्त्वां |
| ६४ | ६ | पिकाशयाश्च | तुल्याशयाश्च |
| ६४ | १३ | क्षेत्रेपयागे | क्षेत्रेप्रयागे |

| पृष्ठं | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६४ | १८ | शख्युर्मम श्रीप्रभुदत्त-ह्मचार्याख्यसाधु-धुप्रभुशक्तिसाह्यत् | सख्युर्मम श्रीप्रभुदत्त-नामसद्ब्रह्मचारि-प्रभुशक्तिसाह्यात् |
| ६५ | १ | सहायतस्त्वां | च साह्यतस्त्वां |
| ७० | ६ | सन्तुष्टिहेतोःकिलप्राकृतानां | स प्राकृतानामपि तुष्टि-हेतोः |
| ७० | १८ | अर्चायामेवपरमे ॥ | अर्चायामेवहरये |
| ७२ | ३ | ग्रहीतुकामे | गृहीतुकामे |
| ७३ | १५ | रजस्वलानंतरपाणि-पीडनाभिधान | कन्याविवाहप्रतिरो-धिशारदाबिल्नाम |
| ७४ | ४ | श्रीराममूर्तीबहु | श्रीराममूर्तिर्बहु |
| ७४ | १५ | कृष्णाभिधोबुधोमे-स्तिसहायकारी | कृष्णबुधोहरेमेस्तिच-साह्यकारी ॥ |
| ७४ | १६ | ल्याटिन् | लाटिन् |
| ७७ | १३ | नःप्रेमदाम्ना | त्वंप्रेमदाम्ना |
| ७७ | १३ | पलायसेऽहो | पलायसेनः |
| ७८ | ३ | फगस्व | भणाद्य |
| ७५ | ८ | त्वान्येषयत्यद्य | गवेषयत्यद्य ॥ |
| ८२ | १ | क्रमात्तवैव | क्रमात्तयेव |
| ८८ | ४ | तवदातुमद्यभोः | वीटीरपिदातुमद्यते |
| ८८ | १९ | तदाह | तदाहं |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८९ | १ | मधिरुक्मिर्णी | अधिभीष्मजं |
| ८५ | ४ | अधिराधिकां ॥ | अधिराधिकं ॥ |
| ८९ | १० | प्रेमप्रसन्नमधुरैः कटाक्षैर्मांलक्षीचकार | प्रेमप्रसन्नमधुराणां कटाक्षाणां मां लक्षीचकार ॥ |
| ८९ | ९ | पेमप्रसन्नया | प्रेमप्रसन्नया |
| ९६ | ११ | तदेवालं तव ॥ | तदेवालं हि ते ॥ |
| ९६ | १२ | तदेवालं तव स्वामिन् ॥ | तदेवालं तुतेस्वामिन |
| १०१ | २ | नेवंतंबलभद्रसंयुतहरिंपप्रच्छुरस्त्रियः ॥ | इत्थंनःप्रमदाजनैर्हलिहरीसंप्राथिंतादरात् ॥ |
| १०० | २१ | मोदकचयाल्लेह्यं | मोदकचयान्लेह्यं |
| १०१ | १४ | परंब्रह्माणमव्ययं | परंब्रह्माजमव्ययम् । |
| १०६ | १३ | मंदभग्यो | मंदभाग्यो ॥ |
| १०७ | १२ | नाविदं | नावेदं |
| १०८ | ७ | त्रैयन्त | त्रैय्यन्त |
| १०९ | २२ | तेनुग्रहायसतथा | तथातेनुग्रहार्थं स चक्रे |
| ११५ | १ | शिव तामुमामे | पातामुमामे |

मैसूरु - के. सिंह्गरामशास्त्रिणामभिनन्दनवाक्यावळ्यां –13. तमे पुटे –17. पङ्क्ती भसख्युरिति स्थाने नस्सख्युरिति सुधीभिः पठनीयम् ॥

श्रीमहालक्ष्म्यै नमः ।

# ॥ श्रीवेङ्कटेश्वरशतकम् ॥



वागीशाद्या देवाः यं नत्वा पूर्णकामाम्म्युः । तं वन्दे विघ्नेशं भक्त्या सम्पद्विनायकं देवम् ॥ १ ॥ श्रीवेङ्कटेशभगवत्करुणाभिकांक्षी श्रीवेङ्कटेशभगवत्पदपद्मभृङ्गः । श्रीवेङ्कटेशनुतिपद्यशतं ब्रवीमि कृष्णाभिधः कविरहं परमेशतुष्ट्यै ॥ २ ॥ फलाभिसन्धिरहितमीश्वरार्पणबुद्धितः । कर्तृत्वाभिनिवेशं हि विनेयं क्रियते कृतिः ॥ ३ ॥ तटाकधननिक्षेप ब्रह्मस्थाप्य शिवालयाः । आरामकूपकृतय स्सप्तसन्तानसंज्ञकाः ॥ ४ ॥ तेपूत्कृष्टां सर्वसम्पत्प्रदात्रीं पात्रे दिस्से श्रीनिवासाभिधेये । पुत्री सैषा मत्कृतिस्त्रायतां नस्त्रिस्सप्तास्मद्वंशजान्बन्धुयुक्तान् ॥ ५ ॥ पात्रं लोकपवित्रमुत्तमतमं नित्यश्रिया संयुतं । नानालंकृतिशोभिताकृतिरियं कन्या सुवर्णात्मिका ॥ तत्पादाम्बुजपूर्णभक्तिभरितेनाद्य प्रदत्ता मया । धन्योऽहं पितृमातृवंशजनितास्सर्वे समुत्तारिताः ॥ ६ ॥ वरोऽजरामरो विष्णुः कृतिः कन्याऽजरामरा । दानेनानेन सम्प्राप्यं पदं स्यादजरामरम् ॥ ७ ॥ जरामरणसंयुता लघुगुणा विवाहे वराः सहस्रमपिवाधिकं ह्यभिलषन्ति शुल्कं शठाः । जरामरणवर्जितो मम कृतेर्वरश्श्रीपतिश्शतैरपि सुवर्णकैर्भवति पूर्णकामो हरिः ॥ ८ ॥ फलाभिसन्धिरहितपरमेश्वरभक्तिमान् । अकर्त्रभोक्त्रात्मविज्ञो लोकसंग्रहदृष्टितः ॥ ९ ॥ पठतां शृण्वतां भक्तिज्ञानवैराग्यदायिनीं । लोकेश्वरस्तुतिमयीं लोकेशाय समर्पये ॥१०॥ सर्वत्र संस्थितं देवं सर्वान्तर्यामिणं हरिं । हृदये सन्नि-

धयाहं संस्तुवेद्य मुखामुखि ॥११॥ यथाऽऽदर्शे स्वान्यदिव स्वमुखंस्वयमीक्षते । तथान्यमिव स्वानन्यमहमद्य हरिं स्तुवे ॥ १२ ॥ परोक्षमज्ञानलेशात् शास्त्रेण स्वानुभूतितः । स्वात्मत्वेनापरोक्षं च विज्ञायोभयधा स्तुवे ॥ १३ ॥ श्रीलक्ष्मीवेङ्कटेशाय श्रीशेषाचलवासिने । श्रीप्रदाय स्वाश्रितानां श्रियःकान्ताय ते नमः ॥ १४ ॥ श्रीलक्ष्मीचरणाम्भोजकुंकुमाङ्कितवक्षसे । सृष्टिस्थित्यन्तलीलाय श्रीनिवासाय ते नमः ॥१५॥ श्रीमद्वेङ्कटनाथाय भक्तसङ्कटहारिणे । विष्णवे वेदवेद्याय पुण्यश्लोकाय ते नमः ॥१६॥ क्ष्वेळाशनप्रियस्वामिन्व्याळशैलालय प्रभो । व्रीळा(डा)कुलव्रजवधू केळीलोलाय ते नमः ॥१७॥ अनन्तकल्याणगुणनिधये निधयेर्थिनां । श्रीमद्वेङ्कटनाथाय श्रीनिवासाय ते नमः ॥ १८ ॥ जनिसङ्कटविनिवारणप्रतिपणभूतं शतं सुपद्यानां । सप्ताचलश्रीवेङ्कटरमणत्वं प्रतिगृहाण करुणाब्धे ॥ १९ ॥

विज्ञापनं यथा—

पर्यङ्कः पदशास्त्रनिर्मितिचणश्छन्दोमयं वाहनं स्यालो यस्य कलानिधिः प्रियसुतो ब्रह्मा स्नुषा शारदा ॥ तस्य श्रीभगवंस्तवस्तवमहो कर्तुं प्रयत्नाच्छ्लोकैर्मूकनिभो विभो नहि भजे व्रीडामहं मूढधीः ॥२०॥ यं वक्तुं न वचोस्ति शक्तिविरहान्मन्तुं मनो नास्ति यं मन्तारंह्यमतंसगद्गदगिरा वेदो जगादान्ततः । तं स्तोतुं कृशधीर्विमोहवशगः पद्यैर्यतन्वाम् । स्वामिन्मूकनिभो विभो नहिभजे व्रीडामहं मूढधीः॥२१॥स्वामिन्नसद्वचननिचयो नीरसस्स्यात्तथायं भक्तास्वाद्यो भवति च भवन्नामधेयानुषङ्गात् । कर्पूराद्यैस्स्थिरपरिमळद्रव्यजालैस्समेतं निर्गंधं स्यादपिसुरभिळं निम्बकाष्ठस्य चूर्णम् ॥२२॥ नाहं गातुं तवकिलयशो नारदाख्यो

महर्षि, नाहं गातुं तव किल यशस्त्यागयाख्यो द्विजेन्द्रः । नाहं नारायणयति-
वरो नैव पुण्यावतीशः । मुग्धो गातुं तव तु सुयशो हंयते पाहि विष्णो ॥२३॥
अहिगिरिपतिं तुष्टूषन्ती मुदा रसनाद्यमे । रचयति नमोवाचः प्राचेत-
सादिकवीन्प्रति । मृदुलवचनै स्सौख्योदर्कैस्सुधारसवर्षिभिः सकल-
जगतां श्रेयःकाव्यं विनिर्ममिरे च ये ॥ २४ ॥ नाहं जाने सरसकवितां
हृद्यपद्यात्मिकां वा । गद्यं हृद्यं रचयितुमपिप्रेरितोभक्तिभावात् (क्तत्रयैः)
स्वामिंस्तोतुं तदपि च यते त्यक्तलज्जो भवन्तं मन्तुं किन्तु प्रथितदयया
क्षंतुमर्हस्यमुन्त्वम् ॥ २५ ॥ स्वामिन्ब्रह्मादिकसुरशिरोरत्न नीराजितांघ्रे ।
सत्कुर्वे ते चरणकमले वृत्तरत्नावळीभिः । भूयःप्रेम्णादिशतु ललितं
वृत्तमेकं भवान्मे स्वीकृत्यैकं दिशति हि पुनस्स्वीकृतेष्वेकमाप्तः ॥ २६ ॥
किंच—

त्वन्नामदिव्यकुसुमानि गुणैस्त्वदीयैस्संग्रथ्यतेऽर्पयितुमुद्यमकारि-
णो मे । कृत्यं गुडात्मकविनायकपृष्ठभागमुत्कृत्य तस्य हि निवेदनकृत्यतु-
ल्यम् ॥ २७ ॥ शरणं करवाणि शार्ङ्गपाणे चरणौ संसृतिमोक्षकारणौ
ते । विमलीकरणक्षमौ श्रितानां यावन्तःकरणस्य भक्तिभाजाम् ॥ २८ ॥
भगवंस्तव वल्लभां कुमांगणवर्णादिजदोषशान्तये । वरदां परदेवतां सदा
हृदये सन्निहितां करोम्यहम् ॥ २९ ॥ हृद्यानवद्यपद्यालिभ्राजितं मन्मु-
खाम्बुजम् । नाळीकजन्मनो देवी कुर्यादार्याभिसंस्तुता ॥ ३० ॥ श्रीवां-
चि मे सन्निधत्तां तदीशस्तोत्रकारिणः । नोचेदहं कथं शक्त स्स्तोतुं वाङ्म-
नसातिगम् । ३१ ॥

## कृतिपतिसम्बोधनम् ।

सर्वतःपाणिपादस्त्वं सर्वतोक्षि शिरोमुखः । सर्वतश्श्रुतिमान्-स्वामिन् मत्स्तुतिं श्रृणुसादरम् ॥ ३२ ॥

यथा— इति पूर्वपीठिका ॥

### ॥ ओमथ ॥

दशावताराम्रिदशावनाय कृतास्त्वया ये निजमाययैव । श्रुत्यन्त-विज्ञानकथानभिज्ञा जातं भवन्तं प्रवदन्ति मन्दाः ॥ १ ॥ *पायादपाया-ज्जन्मादेस्सन्निधिर्भजतां सताम् । मा लोकमातासततं कल्याणगुणशेवधिः॥ २॥ श्रीलक्ष्मीवेङ्कटेशाख्यं दैवतं नौमि सन्ततं । दैवतं देवतानां यन्मङ्गळानां च मङ्गळम् ॥ ३ ॥ श्रीवेङ्कटेशाभिधेयं भागधेयं सतामहं । नौमिदुग्धाब्धि-तनयापयोधरधराधरम् ॥ ४ ॥ श्रीवेङ्कटेश जनिसङ्कटनाश विष्णो भक्ताघनिर्हरणनामसुरासुरारे । स्वानन्यभावसहितान्क्रिमिकीटकादीनु - द्धर्तुमेव कृतदीक्षरमेश पाहि ॥५॥ श्रीशेषशैलशायिनमीशं त्वां वेङ्कटेश-नामानं । जनिसङ्कटहरणचणं समाश्रयेऽहं श्रियः कान्तम् ॥६॥ दया-

---

* भजतां सतां सत्पुरुषाणां सन्निधि नाशरहितो निधिः । पद्मशङ्खादयो-निधयो नाशसहिताः । अयं भगवान्नाशरहितो निधिरिति सन्निधिरिति भावः ॥ किंच । कल्याणगुणशेवधिः । कल्याणगुणानामार्तत्राणपरायणत्व पतितपावनत्व-निष्कारणकरुणापरत्व स्वाश्रितरक्षणत्वाद्यनेककल्याणगुणानां शेवधिः निधिरि-त्यर्थः। लोकमाता । लोकानां माता परिच्छेत्ता वामनरूपेण महाबलिनिग्रहे । तादृशो विष्णुः । मा । मां । जन्मादेः । जन्म - आदिर्यस्य । अपायस्य सः । जन्मादिरपायः । जनिपूर्वकत्वात्सर्वापायानां । तस्मात् जन्मादेरपायात् पायात् रक्षत्वित्येकोऽर्थः ॥ भजतां सतां सन्निधिः । कल्याणगुणा नां शेवधिः । माता श्रीमातृस्वरूपिणी लोक-माता । मा लक्ष्मीः । जन्मादेरपायात् पायात् रक्षत्वित्यपरोपि भावः ॥

दासुरसङ्घनिर्मथनकृत्कोदण्डविद्यागुरुः । श्रीमान्वेङ्कटनाथदैवतमणि - श्श्रेयांसि भूयांसिनः । यस्त्वे वक्षसि दुग्धसागरसुतां क्षेमाय लोकावळे-श्शंखं चक्रमसिङ्गदामपि करैर्नित्यं बिभर्तीश्वरः ॥ ७ ॥ जनिमृतिजरा-रूपान्नूनं महोग्रतराद्भयाद हिगिरिपते न त्रस्यामित्वदङ्घ्रिसमा - श्रयः । कृतबलवदालम्बो लोके कृशोऽप्यकुतोभयो भजति मृगयोः किंवा भीतिं शशो विधुसंश्रयः ॥ ८ ॥ अनन्तकल्याणगुणसमावेश - निवेशनं । वन्देऽरविन्दनयनं वरदं परदैवतम् ॥ ९ ॥ शरणीकरणीया-ङ्घ्रिपद्मं पद्मालयाप्रियं । वन्देऽरविन्दजाजानिं वरदं परदैवतम् ॥१०॥ सदा मुदा हृदंभोजे भजतां प्रीतिपूर्वकं । तापत्रयोपशमननामानं वामनं भजे ॥ ११ ॥ अननुस्मरतस्त्वदीयनाम्नां समतीतानि जनूंषि मे बहूनि । अतएव जपंस्त्वदीय नाम चरणौ ते शरणं व्रजामि तूर्णम् ॥ १२ ॥ स्वामिन्नकृत्रिमगिरो यदि सिन्धुघोषाद्युन्मत्तजल्प सदृशास्मृतयो स्यदि स्युः। त्वां माधवं शरणमापन्नवतो मम स्युर्जन्मादयो विविधदुःखनिदान-भूताः ॥ १३ ॥ भवो भवन्तं हृदि भावितस्य मे कथं भवेन्भोगिनगे-श्वरप्रभो । शीताद्भयं वह्निमुपाश्रितस्य वा हेमन्तकालेऽपि विसृष्टवाससः॥ १४॥ वस्तु स्वस्त्वयनं निरस्तकुहकैर्न्यस्तं पुरस्तादिव स्तौमि न्यस्तभरैस्त्व-दीयचरणे पैतामहं वस्तुवत् । यत्तु ध्वस्तरजस्तमोभिरनिशं स्वान्ते-चिरं मृग्यते तत्तानेव ततःपरं मृगयते चित्रं हि तद्वैभवम् ॥ १५ ॥ कंजायताक्षं तद्धाम त्रायतामयनं सतां । दुग्धाब्धितनयासक्तं हस्तो-द्धृतमहीधरम् ॥ १६ ॥ ॥ कञ्जालया यस्य जाया कञ्जबाणधरस्सुतः । यं भजन्मुच्यते जन्तुः कञ्जनाभमहं भजे ॥ १७ ॥ दैत्यध्वंसि

न्मृत्युमत्येतुमिच्छन् यस्त्वां मुक्त्वा मानयेदन्यदेवान् । त्यक्त्वानावं-सागरं सन्तरिष्णुः काशस्तंबालम्बमिच्छेत्समूढः ॥ १८ ॥ उत्फुल्लपं-कजधरं द्विजराजसेव्यमव्याहताखिलमहाविभवाभिरामं । दुर्लंघ्यसंसृ-तिमहार्णवकर्णधारं प्रालम्बदिव्यवनमाल्यधरं भजे त्वाम् ॥ १९ ॥ नारायणो नरहरिर्नरकासुरारिः पाकारिवैरिगणदारणचक्रपाणिः । वाणीमनोरमणकारणनाभिपद्मः पद्मालयाहृदयपद्मगृहस्स पायात् ॥ २० ॥ रक्षोवंशध्वंसकारिष्णुं जिष्णोश्चित्ते प्रीतिकरिष्णुं । गोपस्त्रीणां वस्त्रहरिष्णुं श्रीमुष्णं त्वां वन्दे विष्णुम् ॥ २१ ॥ श्रीव्याळशैलालय वेङ्कटेशोह्यव्याहतैश्वर्ययुतः परेशः । भूदारवेषोद्धृतभूमिदारो लीलातपत्रा-यितभूधरोऽव्यात् ॥ २२ ॥ क्षीरसागरकुमारिकाप्रियं व्याप्रियन्तमरि-सम्पदं पदा । आश्रितं गुरुतरश्रियायुतं योकरोत्तमहमाश्रये श्रियै ॥२३॥ श्रितसमवनशील श्रीशगोपाल विष्णो शिथिलय भवमूलाज्ञानजालं समूलं। वितर भवपयोधेस्तारकं चान्तकाले श्रुतिपुटकमनीयं नाम ते तारकाख्यं॥ २४॥ श्रीराम नारायण वासुदेव गोविन्ददामोदर माधवेति । सदा मदीया रसना त्वदीयनामानि गातुं धिषणां प्रधेहि ॥ २५ ॥ विधेहि मां दीन दयानिधेविभो भवाम्बुधेः पारगतं कृतागसं । योह्यन्यथाकर्तुमकर्तुमीश्वरः कर्तुं स एवप्रभुशब्दभाग्भवेत् ॥ २६ ॥ याचे प्राञ्जलिरद्य कंजनिलया हृत्कञ्जभृङ्गप्रभो आसुप्तेरपि कालमामृति भवन्नामानि सङ्कीर्तयन् । भक्तै-स्साधुजनैर्विशुद्धहृदयैस्संगं च कुर्वन्सदा कालं नेतुमहं यते यदुपते देया दयामे त्वया ॥ २७ ॥ शेषाधीश त्वयि कृतमनास्त्वत्कृपापातमात्रात् नष्टैश्वर्योऽधिगतविभवोनष्टपूर्वाघजालः । मर्त्योऽमर्त्यो भवति भवति न्यस्तभारो विशोकः । सर्वेश त्वं ह्यघटन(हितुन)तु(सु) प्रसिद्धम् ॥२८॥

श्रेयः प्राप्नोत्यतुलविभवं त्वत्कृपापात्रभूतः नाशोदर्कं भजति च फलं ह्यन्यदेवोपसेवी । अस्मिन्नर्थे दशवदनतद्भ्रातरौ नःप्रमाणं राज्यं प्राज्यं समधिगतवांस्त्वत्परोन्यो विनष्टः ॥ २९ ॥ अनादिकालीनभवादिवासनाः विना प्रयासं विनिवारणक्षमं । विश्वस्य दीनावननामवैभवं विसृज्य भीतिं शरणं व्रजाम्यहम् ॥ ३० ॥ पापव्रातात्परिणतिदशादारुणाद्भीत भीत श्श्रुत्वा वीणामुनिवचनमित्येतदासे विभीकः । शक्तिर्नाम्नो दुरितहरणे यावतीहास्ति विष्णोस्तावत्कर्तुं बहुळदुरितं पापिनो नास्ति शक्तिः ॥३१ ॥ कृपानिधेयस्तवनामधेयाभिधस्तरिस्त्वक्षरदिव्यमूर्तिः । संसारसिंधूत्तरणातुराणां वाङ्मात्रलभ्यस्सुलभोखिलानाम् ॥ ३२ ॥ नामानि कीर्तयतु ते रसना मदीया । येनाखिलान्यघकुलानि विनाशमीयुः। नारायणाच्युत रमेश्वर पद्मनाभ । दामोदरेति मधुराक्षरसंयुतानि ॥३३॥ जरद्दशायां मधुराक्षराणि नामानि येनोच्चरितानि तेऽहो। जीर्यन्ति तस्याखिलपातकानि जरां मृतिं नैते पुनस्स मर्त्यः ॥३४॥ हस्तापचेयफलवृक्षसदृक्षरूपनामाक्षराणि तव ये प्रलपन्ति चान्ते । तेह्यक्षरोच्चरणभाग्यवशाद्भवन्ति नष्टक्षरप्रकृतयोऽक्षरपूरुषाश्च ॥ ३५ ॥ संसारसागरतितीर्षुसुधूमनौकारूपाणि येन मधुराणि तु पूरुषेण । नामाक्षराण्यधिगतानि हि ते स धन्यः । पारंपदं व्रजति संसृतिनामसिंधोः ॥ ३६ ॥ मामुन्निनीषसि यदि त्वममोघशक्ते कर्माणि कारयतदाऽकलुषाणि विष्णो । यद्वा निनीषसि विधो त्वमितोप्यधोधः कर्माणि कारय तदा कलुषाणि-विष्णो ॥ ३७ ॥ आलानयष्टिरसियोगिमनोगजानामाशापिशाचपरिमारणयन्त्रराजः । कामादिषड्रिपुविनाशनदिव्यनामा । वाचामतीतमहिमा हिगिरीन्द्रधामा ॥ ३८ ॥ मादेवीप्रियवल्लभस्य तव या-

सृष्ट्यादिकर्तुः प्रभोः शक्तिः कर्तुमकर्तुमन्यथयितुं जागर्ति लोकोत्तरा । तामेतत्प्रकटीकरोति भजतां (वचनं) गीताश्रुतं मादृशां । धर्मास्त्वं सकलान्विसृज्य शरणं मां याहि मा त्वं शुचः ॥ ३९ ॥ दलितदुरित भङ्गागाङ्गतोयाङ्गसङ्गात् । सुकृतसुजनसङ्गाद्दान्तचेतस्तुरङ्गाः । कृतदुरितविभंगं मुक्तिकान्तान्तरङ्गं कृतजनिमृतिभंगं नाम ते सङ्गिरन्ते ॥ ४० ॥ जगति महतिवंशे जन्मलब्ध्वापि मूढाः विशदमपिपठित्वा वेदशास्त्रे गुरुभ्यः । तव चरणसरोजे भक्तिभावेन हीनाः । नहि नहि कृतिनस्ते ज्ञानवैराग्यहीनाः ॥ ४१ ॥ निश्शेषसंसारनिवर्तनाय मार्गोऽयमास्ते निरपायभूतः । गोगोपगोपीजनसंश्रितो यो विसृज्य सर्वं शरणागतिस्ते ॥ ४२ ॥ अजसुरमुनिबृन्दध्येयपादारविन्दं ह्यजरममरमाद्यं शुद्धबोधस्वरूपं । जननमरणभीतिप्रातसंशान्तयेऽहं शरणमिह भजेयं शार्ङ्गिणं चक्रपाणिम् ॥ ४३ ॥ अम्भोजसम्भवमुखाखिललेखवन्द्यं गम्भीरनाभिकुहरोदितहेमगर्भं । गर्भस्थमायिकचतुर्दशलोकजालं प्रालम्ब दिव्यवनमाल्यधरं भजेऽहम् ॥ ४४ ॥ अनाघ्राताश्श्रौतास्स्मृतिभिरुपदिष्टाश्च विधयो मया शिष्टाचारैरपि न विदिता धर्मनिचयाः । जनिं मृत्युं मूढः कथमिति तराम्भीति च भयंत्यजामित्वन्नामस्मरणबलमाश्रित्य(च) नृहरे ॥ ४५ ॥

किंच—

कर्तुं न प्रभवामि कर्म विधिवत्सन्ध्याधिकं वान्ततः । कर्तुंह्याचमनं यथावदपि माजाने नजाने(न्ततः)तथा । ज्ञानंदुर्ग्रहशास्त्रचिन्तनवशा-

लभ्यं न मे सुग्रहम् । श्रुत्वादीनदयालुतां तव चतुर्भेद्रेपि लिप्सास्ति मे।। ४६ ।। आजन्मतोऽप्यकृतसत्कृतिलेशकस्य सर्वाघकर्तुरपि तिष्ययुगोद्भवस्य ।। सर्वाघहंस्तव सनाश्रयणान्न मे भीः । श्रुत्वापि चेदिति भवद्विदितां प्रतिज्ञां (अपिचेत्सुदुराचारो भजते मामनन्यभाक् । साधुरेव समन्तव्यस्सम्यग्व्यवसितोहि सः)।। ४७ ।। फणीन्द्रगिरिवास मां भवविपन्मयादामयात् विमोचय पयोमुचां निचयतुल्यदेहच्छवे । गदाकरगदाकरं कुरुगदाविहीनंमुदा दयाहि तव मेदुराऽगतिकलोकदीनावने।। ४८ ।। करुणारसेन वरुणालयात्मजाहृदयाधिनाथ यदि मामवेक्षसे । मलिनात्मनापि कलिनाक्रियेत किं यमकिङ्करोपि मम किङ्करो भवेत् ।। ४९ ।। हृदयकुहरमध्ये केवलं ब्रह्ममात्रं ह्यहमहमिति सर्वैरात्मभावेन वेद्यं । गुणरहितमरूपं सच्चिदानन्दरूपं सकलजगदधिष्ठानात्मरूपं भजेऽहम् ।। ५० ।। प्राणायामाभ्यसनरहित स्वाक्षशिक्षाक्षमस्सन् भीतः कृच्छ्राद्यनशनतपो ब्रह्मचर्यव्रतेभ्यः । स्वामिन्नीशे भवति निभृतं मानसं संविधातुं । चित्तैकाग्र्यप्रदसुकवितायोगमेवाश्रयेऽहम् ।।५१।। कविता वितनोति सन्ततस्मृतिहेतोस्तव चिन्तनं हरे । ममता गलिता भवेत्ततो तव पादाम्बुजदासतारतिः।। ५२ ।। व्रतदानतपोविचारणापवमानाभ्यसनादिदुर्लभम् । वितनोति पदं तव स्मृतिश्शिवताते जगतां रमापते ।। ५३ ।। पद्माहृदालिङ्गितमूर्तिराहो संक्रान्ततद्गन्धपरागदेहः । सद्भक्तहृत्पद्मनिवासयोगिन् विभासि मे नीलपिशङ्गकान्तिः ।। ५४ ।। तपोभिरपि योगिनस्तव कृपामवाप्रर्हिया मकिंचनतयैव तां वयमहो सुखेनाप्नुमः । समाधिकुशलाश्श्रमादनुभवन्ति

यद्वैवतं मुदैव तरुणीव्रजो व्रजकुले तदेवान्वभूत् ॥ ५५ ॥ यत्राधिक्या-
द्भवजलनिधिर्दुस्तरो योगिभिर्यो मुग्धानां नस्तरितुमनसां का कथा लोक-
धातः । श्रुत्वा नूनं मुनिजनमुखाद्दीननाथाह्वयं ते विश्वासेन त्वयि वरद मे
धैर्यमेत्यन्तरात्मा ॥ ५६ ॥ विहितं विसृजन्समाचरन्यद्दुरितं कर्म विवेक-
लेशहीनः । तव नाम हरेवलम्ब्यधैर्यादहहाकाणवृषोपमोहमासे ॥ ५७ ॥
विश्वख्यातो जयति वृजिनह्रास दो वासुदेवः विश्वख्यातो ह्यहमपि महा-
पापिनामग्रगण्यः । तस्मादेषा समुचिततरास्त्यावयोर्बन्धुरीतिः यद्वा तद्वा
भवतु भगवन्ते दयामेस्तु भाग्यम् ॥ ५८ ॥ एकेनैव सता कृतं नु भवता
यल्लीलया तत्पुनर्जीवैःकोटिगुणान्वितैर्बहुविधैर्यत्नैर्नकर्तुं क्षमम् । एका-
र्केण चतुर्दशापि भुवनान्युद्दीपितानि त्वया जीवैस्त(र्नाबुंद)त्किलकोटि-
कोटिगुणितैस्त्वौकांसिदीपैस्तथा ॥ ५९ ॥ वर्णैरष्टभिरन्वितस्तव मनु-
स्संख्याति गं मामकं पापं नाशयितुं मुरासुरहरे शक्नोति वा नेति वा ।
शङ्का मे नहि किंचनापि बहुळं गाढान्धकारं क्षणान्नूनं नाशयति प्रदीपकलि-
का (स्वामिन्) स्वल्पागुहासु स्थितम् ॥ ६० ॥ इमंदीनं भक्तं वरदशिशि-
रापाङ्गविसरैः कृपापूरासारैः क्षणमपि समालोकयविभो । ततःकोवा-
नष्टस्तव भवति शार्ङ्गिन्वद हरे ममात्यन्तो लाभो जनिमृतिविनाशश्च
भवति ॥ ६१ ॥ नारायणाश्रितमिमं त्वदपाङ्गदुग्धधाराभिरेनमभि -
षिंच दयाम्बुराशे । नित्यानवद्यनिरुपाख्यसुखं ततो मे स्वाराज्यभाग्यमपि
सिध्यति सत्यमेतत् ॥ ६२ ॥ पतितं फल्गुं बद्धं भ्रष्टं मर्त्यं पन्नगघटित-
मपि । अपवर्गयुक्तमारात्करोति तेऽपाङ्गवीक्षणं विष्णो ॥ ६३ ॥ अपाङ्ग-

पातात्ते विष्णो महापातकिनोऽपि ये । अपाङ्गास्ते भवन्त्येव भौतिकाङ्गा-पुनर्नहि ॥ ६४ ॥ अनङ्गजनक स्मृतिर्जनमनङ्गबाणाकुलं क्रमात्तव-निराकुलं प्रकुरुते सतां सेवया । यया हृदिस(मुत्थ)मिद्धया षडपि शत्रवोह्यान्तराःसमुत्थितभया हरे कुहचनैव लीनाःपरं ॥ ६५ ॥ विष्णुः कलौ सकलपापमपकरिष्णुः श्रीशैलनामनगराजमलङ्करिष्णुः । योह्यार्तभक्तजनतापमपाकरिष्णुःकामादिषड्रिपुजयाय भजेत मीशम् ॥ ६६ ॥ विकचकमलनेत्रं प्रस्फुरन्नीलगात्रं यदुकुलघनमित्रं भक्तहृद्ध्वान्तमित्रं । भुवनशुभचरित्रव्योमभूपालपुत्रीहृदयजलजमित्रं नौमि श्रीशैलरत्नम् ॥ ६७ ॥ ज्ञानामृतानन्दफलप्रदं घनं वेदान्त विज्ञा-नसुपुष्पपूरितं । लक्ष्मीशुभाङ्गाञ्चितबाहुशाखिनं श्रीविष्णुकल्पद्रुम माश्रयेऽनिशम् ॥ ६८ ॥ वेङ्कटेशदया सान्द्र भक्तानामभयङ्कर । लोच-नाभ्यां दयापूरपूरिताभ्यां विलोकय ॥ ६९ ॥ मुदैव गोविन्द तवाभि-धेयं गृणन्सदामुक्तिमुपैति जन्तुः । कलौ युगे हन्त कुमानुषाणामन्येषु धर्मेषु कुतोऽधिकारः ॥ ७० ॥ राघाघवं माधवं त्वां सत्यभामाधवं भजे । भक्ताधीनमनाथानां नाथं नाथं जगत्पतेः ॥ ७१ ॥ ओतं प्रोतं समस्तेषु वस्तुजा(ले)तेषु वस्तु यत् । तत्स्तुवे हस्तिवरदनामकं मायिकं महः॥७२॥ न कर्मणा न प्रजया धनेन न मेधया नो बहुनाश्रुतेन । विनैव विज्ञानविरक्तिभक्तीस्स्वात्मस्वरूपं सुदुरापमीडे ॥ ७३ ॥ भक्तावली-हृदयपङ्कजभानुमूर्तिमिन्द्रादिदेवगणवन्दितपादपद्मं । ओंकार वाच्य-मजमच्युतमप्रमेयं वेदान्तवाक्यचनिरूपितनैजरूपं । दुष्टावली-

शिक्षणकार्यदक्षं शिष्टावळीरक्षणजागरूकं । अक्षातिगं सर्गविनाशदक्षं श्रीवेङ्कटेशं शरणं प्रपद्ये ॥ ७४ ॥ ७५ ॥ सेव्यो वेङ्कटनायकः कलियुगे नान्योऽस्ति संरक्षकस्त्वित्येतत्स्मृतिमाकलय्य मनुजास्सर्वेपि दुर्गस्थितं । यं देहश्रममप्युपेक्ष्य च धनं दत्वा प्रसेव्यप्रभुं विंदन्ति स्वमनोरथानि सततं तं वेङ्कटेशं भजे ॥ ७६ ॥ सृष्टिस्थित्यन्तरूपैस्सकलजनिमतां भक्तिभावानुरूपं क्रीडन्क्रीडाविशेषैः परमिह परमव्योम्नि भूम्नि प्रकामं । स्वेच्छाधीनोऽपि दीनानुतिकृतिनिरतानञ्जसैवोद्दिधीर्षुश्श्रृङ्गेतुङ्गेऽहिशैले लसति नतसखश्श्रीनिवासः कृपालुः ॥ ७७ ॥ त्वद्वीक्षा कियती भवेदपि तदा ब्रह्मादिभिः किं सुरैः त्वत्पादाब्जमनुक्षरद्यदि कियत्किंवा मृतैः पेळवैः । त्वत्पांगेरवलम्बनं यदि कियत्संसारसिन्धुः कियानेवं त्वां शरणं गतस्स्थिरधिया तिष्ठाम्यहं निर्भयः ॥७८॥ गोपीजनापीनपयोधरात्तश्रीगन्धसम्बन्धसुगन्धिदेहः । पयोजनाभो नवनीरदाभदेहो मदंहो हरतादशेषम् ॥ ७९ ॥ स्रष्टारञ्जगतां नौमि भक्ताभीष्टप्रदायकं । अष्टानामपि कष्टानामाश्रितानां निवारकम् ॥ ८० ॥ निवारकं जन्म परंपराणां परं परस्मान्निहितं गुहायां । मायाबलेनाखिळलोकजालं सृजन्तमीशं मनसा नमामि ॥ ८१ ॥ नमामि हृदये मुदा कुमुदळोचनं मेचकच्छविं जरठकच्छपंकलितबर्हपिंछं हरिं । हरिप्रमुखलेखसंस्तुतपदारविन्दं सदा मुकुन्दमहमिन्दिराहृदय मंदिरं सुन्दरम् ॥८२॥ दरस्मितमुखाम्बुजं विपिनसीम्नि जंबूफळप्रलोभितनभोधिपप्रियसुतामनोवल्लभं । मनोमलिनहारि सुन्दरपदारविन्दं हरिं विभुं विधुमजं शिवं

विबुधसौख्यसन्धायकं ॥८३॥ आकाशराजतनया नयनाभिरामं रामानुजं दनुजजालविनाशकालं । कालाम्बुदालिनिभगात्र महीन्द्रगोत्ररत्नं महः किमपि दिव्यमहं नमामि ॥ ८४ ॥ आदिं वन्दे सकलजगतामादिमध्यान्तशून्यं विष्णुं जिष्णुंदितिसुततते्स्सन्मनोलङ्करिष्णुं । वेदोक्तं यः किल कृतयुगे स्थापयामास धर्मं । धर्मध्वंसीत्रज्ञ खलजनध्वंसशूरश्चतिष्ये ॥ ८५ ॥ स्त्रीशूद्रमुख्यजनता धृढभक्तिभाव संवर्धनाय हिनगोपरिराजसेत्वं । लुब्धोत्तमा अपिनितान्तविमुग्धभावास्सर्वस्वमर्पयितुमुत्सुकिनोयतस्ते ॥ ८६ ॥ ध्यानादिकेन नियमेन सहस्रनाम पूजाभिवंदनविराजमखण्डदीपैः । गङ्गाभिषेकसुमचन्दन षोडशोपचारैःकरोमिमनसा तवपूजनानि ॥८७॥ श्रीवेङ्कटेशभगन् मधुशर्कराज्य भक्ष्यान्नलेह्यरसनूपसुशाकमुख्यान् । श्रीवल्लभाय भजतां सुलभाय नित्यंसङ्कल्पितान्मनसितेऽद्यनिवेदयामि ॥ ८८ ॥ भेरीमृदङ्गमुरजामुख हृद्यवाद्यभेदैरहर्निशमनन्यगयाच भक्त्या । चित्तेभजामिसततं कमलापतेत्वां किंतेस्तियन्नविदितंसकलान्तरस्य ॥ ८९ ॥ चित्रंचरित्रंतवमुक्तिलाभोरणं श्रितानांचरणं श्रितानां । लंकेशकंसासुरचेदिपानाम् । कुब्जायशोदार्जुन नारदानाम् ॥९०॥ आर्तान्विरक्ताननुरक्तियुक्तान्भक्तानभक्तानपिवैरयुक्तान् । ययाकयावा विधयास्वसक्तान्करोषिमुक्तानसतस्सतोवा॥९१॥ समाधिवृत्तिस्त्वनन्यताधीः समं मुनीनामपिकामिनीनां । रक्ति(श्च)र्विरक्ति (भक्ति) विषमं निमित्तं निर्वाणरूपं फल मेकमेव ॥ ९२ ॥ लोकेशाच्युतमामनोहर घनश्यामाङ्गविष्णो विभो ।

श्रीशेषाचलवास हस्तिवरदप्रह्लादसंरक्षक । भक्ताभीष्टवरप्रदाननिरत श्री वेङ्कटेशप्रभो । स्वामिन्कालमहंनयामिसततं नामानितेकीर्तयन् ॥९३॥ पद्मासनीप्रियहरे परवासुदेव सर्वज्ञभक्तवरदाभयदानदक्ष । श्रीवेङ्कटेश मधुसूदन पुष्कराक्षरक्षस्व मांकलिमलापहदक्ष भक्तम् ॥ ९४ ॥ भक्तेनापिमया विभोप्रतिकलं देहेनबुध्याहृदा वाचापीन्द्रियपञ्चकैरपिकृता येवाक्रियन्तेऽधुना । अज्ञानाच्चनिसर्गतःकुजनसंसर्गात्प्रमादादपि । क्षन्तव्या मम मन्तवोयदुपते श्रीवेङ्कटेशप्रभो ॥ ९५ ॥ इन्दिराहृदयमन्दिरंहरिं (सदा)नन्दनन्दनमतीवसुन्दरम् । दानवारिमहमाश्रयेश्रियै । दानवारिसमुपार्जितश्रियम् ॥ ९६ ॥ प्रह्लाद नारदमुखा खिलभक्तजालध्येयस्वरूपनिरूपनिरुपाधिकचित्स्वप पद्मासनीहृदयवल्लभवासुदेव रक्षस्व मांफणिगिरीन्द्रनिवासविष्णो ॥ ९७ ॥ अन्याश्रयनिरपेक्षं भक्तानां योददातिसकलार्थान् । जगदेकशरण्यं त्वां श्रीवेङ्कटनायकंवन्दे ॥ ९८ ॥ योवाञ्छितान्नकेवलमर्थान्प्रददाति भक्तबृन्देभ्यः । सर्वार्थप्रदमीशंत्वां वेङ्कटनायकं वन्दे ॥ ९९ ॥ सद्यःक्रमइतिमुक्तिं द्विविधामपियोददातिभक्तानाम् । अधिकारानुगुणेनहितं वेङ्कटनायकं वन्दे॥१००॥जगदेतन्मिथ्येतिसर्वं स्वस्यैवसत्तयास्तीति । योभक्तान् बोधयति त्वां वेङ्कटनायकं वन्दे ॥१०१॥ हृदयकुहरमध्ये केवलंध्येयरूपं ब्रह्ममहमितिसर्वै रात्मभावेनवेद्यम् । गुणरहितमरूपं सच्चिदानन्दरूपं सकलजगदधिष्ठानात्मरूपंभजेत्वाम ॥ १०२ ॥ भीतोवायुश्चलतिभगवं स्त्वत्तएवेतिमन्ये । भीतस्सूर्यस्तपतिभगवं स्त्वत्तएवेतिमन्ये । भीतोवह्निर्ज्वलतिभगव न्पाति-

लोकानपीन्द्रो । भीतोमृत्युर्ग्रसतिसकला न्प्राणिनो लीनरूपः ॥१०३॥ ध्यानह्रदे ज्ञानजले रागद्वेषमलापहे । स्नात्वाहं मानसेतीर्थे त्वामन्तर्यामिणंयजे ॥ १०४ ॥ त्वत्तोजातोलोकजालसमस्तः । त्वत्तोवृद्धिंयातिनाशंक्रमेण । नाहंत्वत्तोऽनन्य एवास्मिविष्णो भेदाभेदौनैवशक्नोमिवेत्तुम्॥ १०५॥ विश्वस्वरूपं प्रकृतेःपरं यदनादिमध्यान्त मनन्तमव्ययं । एकंविभुं पूर्णमशेषमद्वयं प्रत्यक्स्वपं(च) भ(ग)वन्तमीडे ॥ १०६ ॥ योहंपरोस्मि भगव न्स्वाज्ञानाज्जीवसंज्ञकः । सएवाहमिदानींतु वस्तुतो ब्रह्मतद्भजे ॥ १०७ ॥

श्रीवेङ्कटेशगोविंद माधवानन्तकेशव । कृष्णविष्णो हृषीकेश करुणाकरपाहिमाम् ॥ १०८ ॥ काञ्चीमण्डल कामकोटियतिरा डास्थान संख्यावता । काञ्चीमण्डल काकवाकनिलय श्रीकृष्णनाम्नामया ॥१०९॥ स्वामिन्निर्गुणरूपया सगुणया भक्त्याकृताशक्तितः । श्रीमद्वेङ्कटनाथ त्वन्नुतिकृति स्त्वत्पादयोरर्पिता ॥ ११० ॥ अहिगिरिकृतवासो भक्त-

---

अयमत्रविवेकः—

गुरूपसदन शास्त्रविचार पूर्वकाले अनाद्यज्ञानवशात् । योहंपरो जीवसंज्ञोऽस्मि । सएवेदानीं (शास्त्राचार्येश्वरानुग्रह लब्धविचारदशायां) अहंब्रह्म । वस्तुतो ब्रह्मण्येवमयि पूर्वमज्ञानात् । अब्रह्मत्वं जीवत्व मारोपितमासीत् । तस्मिन्नज्ञाने (गुरूपदेशलब्धेन शास्त्रविचारजनितेन भगवदनुग्रह प्रोद्बलितेन साधुसङ्गसंवर्धितेन) विवेकज्ञानेन । समूलमुन्मूलिते । विनष्टेमोहे लब्धस्वरूपविज्ञानो वस्तुतः पूर्वसिद्धमेव ब्रह्मत्व मनुभवितास्मि । तस्मादहमेवहि ब्रह्माऽनुभववेळायामपि । पूर्वसिद्धोऽहमेव । नतुयोषित्यग्निध्यानवत् उपचरितं ब्रह्मत्वंमयि । अतोऽहमेवमां ब्रह्मभजामीतिभावः ॥

हृत्पद्मवास स्तिलसुमसमनासो मत्कृतीशः परेशः । जलनिधिवरपुत्री-
निर्विशेषंकृतिंमे हृदिकलयतुनित्यं श्रीनिवासः कृपालुः ॥ १११ ॥

इति श्रीराधामाधव पादसेवकः,
भगवद्भागवत पादसेवकः,
काकवाक - उ. कृष्णः.

Printed at the Vavilla Press Madras—21.—1955.



एष चम्पूप्रबन्धः

काकवाक श्रीकृष्णशास्त्रिविरचितः ।

प्राप्यस्थानम्—

(काकवाकाग्रहारः उ. (कृष्णशास्त्री) ग्रन्थकर्ता ।

पेद्पाळयं पोस्टु (वया पोन्नेरि 1) चेङ्गल्पट् जिल्ला मद्रास् समीपं)

इति वि. पि. द्वारा लभ्यः ।

मार्गव्ययार्थं चतुरणाक (पोस्टुलेबिल्) परिमित

मुद्राचीटीप्रेषणेन लभ्यः ।

हरिभक्तिप्रोत्साहको ग्रन्थराजः सर्वैरवश्यं पठनीयः ।

श्रीराधारमणः प्रीयताम् ॥



